श्रीः

हरिदास-संस्कृत-ग्रन्थमाला
२५५

# ध्वन्यालोक-रहस्यम्

( प्रश्नोत्तरी )



चौखम्बा संस्कृत सीरिज आफिस,
बनारस-१

॥ श्रीः ॥

❀ हरिदास-संस्कृत-ग्रन्थमाला ❀



॥ श्रीः ॥

# ध्वन्यालोक-रहस्यम्

## ( प्रश्नोत्तरी )

रचयिता—

**पण्डित श्री शोभित मिश्रः**

[illegible] ओरियन्टल [illegible] दर्शनविद्यालय [illegible]

व्याकरण-साहित्य [illegible]



प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस,

बनारस-१



 [ ई० १९५४

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला



॥ श्रीः ॥

# ध्वन्यालोक-रहस्यम्

## ( प्रश्नोत्तरी )

रचयिता—

**पण्डित श्री शोभित मिश्रः**

[illegible] दर्शनविद्यालयस्थ-

व्याकरण-साहित्याध्यापकः।



प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस,

बनारस-१



 [ ई० १९५४

॥ श्रीः ॥

# ध्वन्यालोक-रहस्यम्

## प्रथमोद्द्योतः

शारदां सारदां ध्यात्वा वीणावाद्यविशारदाम् ।
ध्वन्यालोकरहस्यं सन्तनुते शोभितः सुधीः ॥

(१) प्रश्नः—ध्वन्यभाववादिनां विकल्पानुपन्यस्य तान् निरस्य व्यङ्ग्य-सङ्गिषु समासोक्त्याद्यलङ्कारेषु ध्वन्यन्तर्भावाभावं वा प्रविभावयत ?

उत्तरम्—ध्वन्यभाववादिनां बहुषु विकल्पेषु प्रथमविकल्पस्यायमभिप्रायः-शब्दार्थशरीरस्यैव काव्यत्वेऽनुप्रासादिषु शब्दालङ्कारेषु खलु विद्यमानेषु चोपमादिष्वर्थालङ्कारेषु सत्सु च माधुर्यादिषु गुणेषु विद्यमानेषु च वैदर्भीप्रभृतिरीतिषु चारुताहेतुषु तद्व्यतिरिक्तो नास्ति कश्चिदन्यो ध्वनिरिति ।

द्वितीयविकल्पस्यायं सारांशः—सहृदयहृदयाह्लादजनकशब्दार्थमयत्वस्यैव काव्यत्वे प्रसिद्धगुणालङ्कारादिव्यतिरिक्तो नास्त्येव ध्वनिः । अर्थात् तत्कालीनव्यक्तिविशेषसम्मतो ध्वनिर्नैव सकलसहृदयविद्वद्धृदयहारी सम्भवितुमर्हति, कस्याप्येकस्य मनोऽनुकूलत्वेऽपि सर्वेषां विदग्धानां मनोऽनुकूलत्वं न सम्भवति, विशेषचमत्कृतिजनकत्वाभावात् । नहि प्रेक्षावन्तो जना व्यक्तिविशेषं प्रतिश्रद्धाजाड्येनालीकं वस्तु मन्यन्ते इत्यपूर्वं न किमपि ध्वनिनामकं वस्तु विद्यते इत्यभिप्रायः । एतावता परिगणितेभ्यो गुणालङ्कारादिमत्प्रकारेभ्योऽन्यत्र सहृदयहृदयाह्लादकत्वं नानुभवसिद्धमिति न काव्यत्वं ध्वनाविति सिद्धम् ।

तृतीयविकल्पस्यायं भावः—विच्छित्तिविशेषरूपलोकोत्तरचमत्कारमनतिवर्तमानस्य तस्य ध्वनेरुक्तालङ्कारादिष्वेवान्तर्भावात् तद्व्यतिरिक्तमपूर्वध्वनिनामकरणं केवलं

॥ श्रीः ॥

# ध्वन्यालोक-रहस्यम्

## प्रथमोद्द्योतः

शारदां सारदां ध्यात्वा वीणावाद्यविशारदाम् ।
ध्वन्यालोकरहस्यं सन्तनुते शोभितः सुधीः ॥

(१) प्रश्नः—ध्वन्यभाववादिनां विकल्पानुपन्यस्य तान् निरस्य व्यङ्ग्य-सङ्गिषु समासोक्त्याद्यलङ्कारेषु ध्वन्यन्तर्भावाभावं वा प्रविभावयत ?

उत्तरम्—ध्वन्यभाववादिनां बहुषु विकल्पेषु प्रथमविकल्पस्यायमभिप्रायः-शब्दार्थशरीरस्यैव काव्यत्वेऽनुप्रासादिषु शब्दालङ्कारेषु सत्सु विद्यमानेषु चोपमादिष्वर्थालङ्कारेषु सत्सु च माधुर्यादिषु गुणेषु विद्यमानेषु च वैदर्भीप्रभृतिरीतिषु चारुताहेतुषु तद्व्यतिरिक्तो नास्ति कश्चिदन्यो ध्वनिरिति ।

द्वितीयविकल्पस्यायं सारांशः—सहृदयहृदयाह्लादजनकशब्दार्थमयत्वस्यैव काव्यत्वे प्रसिद्धगुणालङ्कारादिव्यतिरिक्तो नास्त्येव ध्वनिः । अर्थात् तत्कालीनव्यक्तिविशेषसम्मतो ध्वनिर्नैव सकलसहृदयविद्वद्हृदयहारी सम्भवितुमर्हति, कस्याप्येकस्य मनोऽनुकूलत्वेऽपि सर्वेषां विदग्धानां मनोऽनुकूलत्वं न सम्भवति, विशेषचमत्कृतिजनकत्वाभावात् । नहि प्रेक्षावन्तो जना व्यक्तिविशेषं प्रति श्रद्धाजाड्येनालीकं वस्तु मन्यन्ते इत्यपूर्वं न किमपि ध्वनिनामकं वस्तु विद्यते इत्यभिप्रायः । एतावता परिगणितेभ्यो गुणालङ्कारादिमत्प्रकारेभ्योऽन्यत्र सहृदयहृदयाह्लादकत्वं नानुभवसिद्धमिति न काव्यत्वं ध्वनाविति सिद्धम् ।

तृतीयविकल्पस्यायं भावः—विच्छित्तिविशेषरूपलोकोत्तरचमत्कारमनतिवर्तमानस्य तस्य ध्वनेरुक्तालङ्कारादिष्वेवान्तर्भावात् तद्व्यतिरिक्तमपूर्वध्वनिनामकरणं केवलं

# प्रकाशकीयम्

अस्मिञ्जगति प्रवृत्तिमार्गमवलम्ब्य पुत्रकलत्रादिप्रसक्तमानसैरपि जनैर्ब्रह्मानन्दो-लब्धुं यदि शक्येत तर्हि काव्यगतरसास्वादेनैव, अतो ब्रह्मानन्दसोदरो निगलित-वेद्यान्तरः स रसो ध्वनिरूपो व्यञ्जनावृत्तिगम्यो विना ध्वनिज्ञानेन नाधिगतः स्यात्, इति हेतोः आनन्दवर्द्धनाचार्यैः कृते ध्वन्यालोकमूलके ध्वन्यालोके परमादरः क्रियते काव्यरसिकैः। अपि च तस्य परमोपयोगितां सत्तमतां चावलोक्य प्रायेण शास्त्र्या-चार्यपरीक्षासु सर्वत्र प्रदेशेषु संस्कृतविश्वविद्यालयपरीक्षापाठ्यपुस्तकनिर्धारणसमित्या पाठ्यपुस्तकत्वेन स निर्धारितः। अतः परीक्षार्थिनां विद्यार्थिनां प्रश्नोत्तरलेखसम्बन्धि-काठिन्यं दूरीकर्तुं मया न्यायव्याकरणाद्याचार्यश्रीशोभितमिश्रद्वारा 'ध्वन्यालोकरहस्यम्' नाम प्रस्तुतं पुस्तकं विरचय्य प्राकाश्यं नीतम्। अत्र क्रमेण प्रष्टव्यविषयाणां समु-चितरूपेण प्रश्नाकारनिर्देशपुरःसरमुत्तराणि लिखितानि सन्ति, येषां सम्यग्रूपेण पर्यालोचनतो नूनं परीक्षोदधिसमुत्तीर्णतामवाप्स्यन्ति विद्यार्थिन इति बाढं मे विश्वासः। 'गच्छतः स्खलनम्' इति न्यायात् संशोधकदृष्टिदोषाद्वा याः काश्चित् त्रुटयः सञ्जाता भवेयुस्ता गुणग्राहिणो मनीषिणः संक्षंस्यन्त इति सानुनयं मेऽभ्यर्थनेति।

दीपावली

सं० २०११

॥ श्रीः ॥

# ध्वन्यालोक-रहस्यम्

## प्रथमोद्द्योतः

शारदां सारदां ध्यात्वा वीणावाद्यविशारदाम् ।
ध्वन्यालोकरहस्यं सन्तनुते शोभितः सुधीः ॥

(१) प्रश्नः—ध्वन्यभाववादिनां विकल्पानुपन्यस्य तान् निरस्य व्यङ्ग्य-सङ्गिषु समासोक्त्याद्यलङ्कारेषु ध्वन्यन्तर्भावाभावं वा प्रतिभावयत ?

उत्तरम्—ध्वन्यभाववादिनां बहुषु विकल्पेषु प्रथमविकल्पस्यायमभिप्रायः-शब्दार्थशरीरस्यैव काव्यत्वेऽनुप्रासादिषु शब्दालङ्कारेषु सत्सु विद्यमानेषु चोपमादिष्वर्थालङ्कारेषु सत्सु च माधुर्यादिषु गुणेषु विद्यमानासु च वैदर्भीप्रभृतिरीतिषु चारुताहेतुषु तद्व्यतिरिक्तो नास्ति कश्चिदन्यो ध्वनिरिति ।

द्वितीयविकल्पस्यायं सारांशः—सहृदयहृदयाह्लादजनकशब्दार्थमयत्वस्यैव काव्यत्वे प्रसिद्धगुणालङ्कारादिव्यतिरिक्तो नास्त्येव ध्वनिः । अर्थात् तत्कालीनव्यक्तिविशेषसम्मतो ध्वनिर्नैव सकलसहृदयविद्वद्धृदयहारी सम्भवितुमर्हति, कस्याप्येकस्य मनोऽनुकूलत्वेऽपि सर्वेषां विदग्धानां मनोऽनुकूलत्वं न सम्भवति, विशेषचमत्कृतिजनकत्वाभावात् । नहि प्रेक्षावन्तो जना व्यक्तिविशेषोक्तिश्रद्धाजाड्येनालीकं वस्तु मन्यन्ते इत्यपूर्वं न किमपि ध्वनिनामकं वस्तु विद्यते इत्यभिप्रायः । एतावता परिगणितेभ्यो गुणालङ्कारादिमत्प्रकारेभ्योऽन्यत्र सहृदयहृदयाह्लादकत्वं नानुभवसिद्धमिति न काव्यत्वं ध्वनाविति सिद्धम् ।

तृतीयविकल्पस्यायं भावः—विच्छित्तिविशेषरूपलोकोत्तरचमत्कारमनतिवर्तमानस्य तस्य ध्वनेरुक्तालङ्कारादिष्वेवान्तर्भावात् तद्व्यतिरिक्तमपूर्वध्वनिनामकरणं केवलं

वागाडम्बरमात्रं गगनकुसुमवदलीकध्वनिवस्त्वभिमानिनां मिथ्याभूतसहृदयत्वभावनापिहितान्तःकरणानां गजनिमीलनिकामात्रमेतत् ।

भाक्तत्ववादिनां भट्टोद्भटादीनां चतुर्थविकल्पस्यायमभिप्रायः—ध्वनिरयं भाक्तः, अर्थात् लक्षणात्मिका गौणीवृत्तिः भक्तिरेव ध्वनिः, तदतिरिक्तो ध्वनिर्नास्ति कश्चित् पदार्थः ।

ध्वनेरनिर्वचनीयत्ववादिनां पञ्चमविकल्पस्यायमभिप्रायः—सहृदयहृदयसंवेद्योऽयं ध्वनिः नासहृदयजनबुद्धिगम्यः, अत एव सर्वथाऽनिर्वचनीय एवायं ध्वनिरिति । तदेवंविधानेकप्रकारकवैमत्ये समुपस्थिते सहृदयानां स्वान्तसन्तोषाय ध्वनेर्वास्तविकं स्वरूपं प्रदर्श्य उपर्युक्तवादिमतखण्डनं क्रियते—

'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' । 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत् तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु' । इति कारिकाद्वयानुसारं यस्मिन् काव्ये शब्दार्थौ कमपि विलक्षणमेव लोकोत्तरचमत्कारजनकं व्यङ्ग्यार्थम्प्रति स्वात्मानं गौणीकृत्य प्राधान्येन विच्छित्तिविशेषाधायकव्यङ्ग्यार्थपरायणौ स्तः तद् ध्वनिनामकमुत्तमं काव्यं स्मृतम् । तथा च व्यङ्ग्यविशिष्टशब्दार्थोभयत्वमेव ध्वनिकाव्यस्य निष्कृष्टं लक्षणं पर्यवसितम् । वैशिष्ट्यञ्च स्वविषयकप्रतीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयत्व, स्वव्यञ्जकघटितत्व, एतदुभयसम्बन्धेन । एवं कामिनीकलेवरे स्तनजघनाद्यवयवातिरिक्तं किमपि युवजनकमनीयं लावण्यमिव महाकविवाणीषु प्रतीयमानं तद् व्यङ्ग्यं नाम वस्तु वाच्यवाचकाभ्यां विलक्षणमेव सहृदयहृदयवेद्यं नापलपितुं शक्यते कथमपि सहृदयैरिति ।

एतेन वाच्यवाचकचारुत्वहेतुषु उपमाऽनुप्रासाद्यलंकारेषु वाच्यायमानेषु माधुर्यप्रसादादिगुणेषु वैदर्भीप्रभृतिरीतिषु च ध्वनेरन्तर्भावं कुर्वतां ध्वन्यभाववादिनां मतमपास्तम् ।

तथा प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति इति द्वितीयविकल्पवादिनां यो ध्वन्यभाववादः सोऽपि नैव समीचीनः, यतो हि रामायणमहाभारतादौ बहुत्र स्थले विच्छित्तिविशेषाधायकव्यङ्ग्यार्थप्रधानध्वन्यात्मककाव्यत्वस्य प्रसिद्धत्वेन सहृदयहृदयाह्लादिशब्दार्थमयत्वरूपतत्कृतकाव्यलक्षणस्य ध्वनिप्रधानकाव्येऽव्याप्तिदोषग्रस्ततया प्रेक्षावतामनुपादेयत्वात् । लक्ष्यानुसारेणैव लक्षणविधानस्य

युक्तत्वेन लक्ष्याप्रसिद्धेरेव ध्वनिसिद्धौ बाधकत्वेऽपि लक्षणाप्रसिद्धेर्बाधकत्वस्य वक्तुमयुक्तत्वात् । काव्यजीवनाधायकव्यङ्ग्यरसादिध्वनिरूपलक्ष्यस्य बहुशो महाभारतादौ प्रसिद्धत्वेन तादृशलक्ष्यमव्याप्नुवतः प्रागुक्तकाव्यलक्षणस्य विधातुरेव शिरसि दोषः समापतति । नहि स्थाणोरयमपराधो यदेनमन्धो न पश्यति । लक्षणविधायिनां हि लक्षणविधाने न तादृशं पाण्डित्यमपेक्ष्यते यादृशं लक्ष्यपरीक्षणविधायिनामिति लक्ष्यस्य परीक्षणमेव प्रेक्षावतां विदुषां वैदुष्यनिकषायितमिति द्वितीयविकल्पोऽपि पराहत एवेति भावः ।

एवं 'कामनीयकमनतिवर्तमानस्य तस्य ( ध्वनेः ) उक्तालंकारादिप्रकारेष्वेवान्तर्भावः' इति ध्वन्यभाववादिनां तृतीयविकल्पोऽप्यज्ञानविलसित एव, यतो हि वाच्यवाचकमात्राश्रयिषु उपमाऽनुप्रासाद्यलंकारेषु व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेरन्तर्भावस्य वक्तुमशक्यत्वात् । तदुक्तम्—'व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः । वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः' । इति । ये खलु वाच्यमात्रानुसारिणः समासोक्त्यादयः अलंकारास्तेषां वाच्यभूतालंकाराणामेव लोकोत्तरचमत्कारजनकत्वस्य सहृदयैरनुभूयमानत्वेन व्यङ्ग्यतया प्रतीयमानस्योपमानादेस्तत्र विच्छित्तिविशेषानाधायकतया गुणीभूतत्वात् तेषु समासोक्त्यादिषु ध्वनेरन्तर्भावो न भवितुमर्हति । तदुक्तं—'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ । ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः' । इति । एवञ्च गुणालंकारवृत्तीनां ध्वनेरङ्गभूतत्वात् नैव तेषु ध्वनेरन्तर्भावसंभवः ।

भक्तिरेव ध्वनिरिति चतुर्थविकल्पोऽपि न युक्तः, उभयोः ( ध्वनिलक्षणयोः ) भिन्नरूपत्वात् । तदुक्तं—'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः' इति । नापि लक्षणारूपाया भक्तेर्ध्वनिलक्षणत्वं संभवति, 'परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् इदं व्यस्तन्यस्तं श्लथभुजलताऽऽक्षेपवलनैः कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्' इत्यादावपि लक्षणायाः सत्त्वेन ध्वनेस्तत्राभावादतिव्याप्तेः । तदुक्तम्—'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' इति । किञ्च 'वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता । व्यञ्जकैकत्वमूलस्य ध्वनेः स्याल्लक्षणं कथम्' इति

तथैव ध्वन्यभाववादिनां यो हि ध्वनेरनिर्वचनीयत्वरूपः पञ्चमो विकल्पः सोऽपि प्रेक्षावतामनुपादेय एव, रामायणमहाभारतादौ प्रसिद्धे लक्ष्ये ध्वनिकाव्यत्वस्य बहुशो

व्यवहारदर्शनेन तस्यापलापासंभवात् । एतत्प्रसिद्धविषयाणामपलापे तु तुल्ययुक्त्या समेषामपि वस्तूनामपलापापत्तिरित्याकूतम् । तस्माद् ध्वनिरस्तीति सिद्धम् । एतेन ध्वन्यभावमुपपाद्य निराकुरुत इत्यादयः सर्वेऽपि प्रश्नाः समाहिताः । एवं 'परमतनिरसनपूर्वकं ध्वनिः स्थाप्यताम्' इति प्रश्नोऽपि समाहितो वेदितव्यः । सर्वेषामुक्तोत्तरेणैव समाहितत्वात् ।

(२) प्रश्नः—योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥

**अत्र प्रतीयमानार्थ इव वाच्यार्थोऽपि सहृदयश्लाघ्यतया काव्यस्यात्मभूत इति प्रतिपादितम् 'काव्यस्यात्मा ध्वनिरि'ति प्रथमकारिकया प्राक् च कथितम् । तत्कथमेतद् विरोधपरिहारः ?**

उत्तरम्—ननु 'काव्यस्यात्मा ध्वनिरिति बुधै'रिति प्रागुक्तवचनेन 'काव्यस्यात्मा स एवार्थ' इत्यग्रिमवचनेन च प्रतीयमानस्यैवार्थस्य काव्यात्मत्वप्रतीतेः 'अर्थः सहृदयश्लाघ्य' इति कारिकया च वाच्यार्थस्यापि काव्यात्मत्वं प्रतिपाद्यते इति स्पष्टमेव विरोधः समापततीति चेन्मैवम्, प्रथमतोऽर्थत्वेनार्थसामान्यमभिधाय तत्र वाच्यार्थस्य संग्रहेऽपि पश्चात् सहृदयश्लाघ्यविशेषणद्वारा वाच्यार्थस्य सहृदयश्लाघ्यत्वाभावेन काव्यात्मत्वेनोपादानाभावात् सहृदयश्लाघ्यस्य प्रतीयमानार्थस्यैव काव्यात्मत्वव्यवस्थानात् इति व्यङ्ग्यरूपो ध्वनिरेव काव्यस्यात्मा न तु वाच्यार्थ इति भावः । तदुक्तं लोचने—'स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या विभज्यते । तथाहि तुल्येऽर्थरूपत्वे किमिति कस्मैचिदेव सहृदयाः श्लाघन्ते न सर्वस्मै तद् भवितव्यं केनचिद् विशेषेण। यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते। वाच्यसंकलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते, चार्वाकैरिवात्मपृथग्भावे । अत एव 'अर्थ' इत्येकतयोपक्रम्य 'सहृदयश्लाघ्य' इति विशेषणद्वारा हेतुमभिधायापोद्धरणदशा तस्य द्वौ भेदावंशावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्येति ।' न च तर्हि ध्वनिनिरूपणावसरे वाच्यार्थनिरूपणमसङ्गतमिति वाच्यम् ? व्यङ्ग्यार्थबोधौपयिकत्वेन वाच्यार्थनिरूपणस्यापि अपेक्षितत्वात् । तदुक्तमग्रे—'तदुपायतया तद्वदर्थे वाच्ये तदादृतः' इति । 'यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते । वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुन' इति । एतेन वाच्यस्य सहृदयश्लाघ्यतोक्तेः कोऽभिप्राय इत्यादयः सर्वेऽपि प्रश्नाः स्वयमेव समाहिता भवन्ति । उक्तोत्तरेणैव

सर्वेषां समाहितत्वात्। एवं वाच्यस्य काव्यात्मत्वं खण्डनीयमिति प्रश्नस्याप्युक्तमेवोत्तरं बोध्यम्।

(३) प्रश्नः—ध्वनेः प्रतिप्रसवो यन्निबन्धनस्तत्स्वरूपं परिचाययितव्यम् ?

उत्तरम्—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ। व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' इति कारिकानुसारं 'वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्' इति रीत्या वाच्यार्थापेक्षयाऽधिकचमत्कारशालिव्यङ्ग्यार्थवैलक्षण्यप्रयुक्तमेव ध्वनिकाव्यस्य जननं प्रतिप्रसवो व्यवहारो वा भवति, अतो व्यङ्ग्यार्थस्वरूपं प्रदर्श्यते—'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्। यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु' इति कारिकया प्रशस्तरमणीषु प्रसिद्धकरचरणाद्यवयवातिरिक्तं किमपि कमनीयं निर्वर्ण्यमानं 'मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमितीरितम्' इति लक्षणलक्षितं लावण्यमिव महाकवीनां कवितात्मकवाणीषु प्रसिद्धशब्दार्थ-तदुभयालंकार-गुणादिभ्योऽतिरिक्तं प्रतीयमानं यत् सहृदयहृदयसुप्रसिद्धं वस्त्वलंकाररसादिरूपत्रिशाखात्मकं वस्तु भासते तत् अन्यदेव अर्थात् किमपि विलक्षणमेव न तु वाच्यवाचकादिरूपं विद्यते इति दृष्टान्तदार्ष्टान्तिकभावेन प्रतिपाद्यमानं सहृदयहृदयाह्लादजनकं व्यञ्जनया प्रत्याय्यमानं व्यङ्ग्यार्थरूपं वस्तु ध्वनिप्रयोजकमवसेयम्। तदुक्तं विवृतौ-'प्रतीयमानं पुनरन्यदेव वाच्यात् वस्त्वस्ति वाणीषु महाकवीनाम्। यत् तत् सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वाऽवयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु। यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः' इति। स ह्यर्थो वाच्यसामर्थ्यव्यञ्जनयाऽऽक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेति अनेकप्रभेदभिन्नो वर्तते। सर्वेषु च प्रकारेषु तस्य व्यङ्ग्यार्थस्य वाच्यार्थात् सर्वथाऽन्यत्वमेव प्रतिपत्तव्यमिति।

(४) प्रश्नः—वाच्यस्य विधिरूपत्वे निषेधस्य व्यङ्ग्यरूपत्वं, वाच्यस्य निषेधरूपत्वे व्यङ्ग्यस्य विधिरूपत्वञ्चोदाहरणद्वारा स्फुटं प्रतिपाद्य विवक्षितो विषयः प्रतिपादनीयः।

उत्तरम्—पुष्पाण्यवचेतुं स्वसङ्केतस्थलीभूतगोदावरीतटस्थनिकुञ्जम्प्रति गच्छन्तं कमपि पुरुषं रहस्यभेदाशङ्कयाऽभिसारविघ्नभयेन वा भीषयितुं काचन पुंश्चली नायिकाऽभिधत्ते—'भ्रम धार्मिक! विश्वस्तः स शुनकोऽद्य मारितस्तेन।

गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन' इति । अर्थात् हे धार्मिक ! विश्वस्तः सन् यथेच्छं न तु पूर्ववत् सभयं भ्रम पुष्पाणि चेतुं संचर, यतः स त्वत्त्रासहेतुः श्वा अद्य तेन विख्यातेन गोदावरीनदीपुलिनकुञ्जवासिना दर्पशालिना अत्यन्तघातुकेन सिंहेन मारितो हत इति भावः । अत्र भयकारणस्य शुनकस्य मरणोपन्यासेन भ्रमणविधिर्वाच्यभूतः, शुनकादपि भीरुपुरुषस्य सिंहोपलब्धिकथनेन सुतरां भ्रमणाभावस्तु वस्तुरूपः, संकेतरहस्यभेदभीरुकुलटावैशिष्ट्येन व्यङ्ग्यतया प्रतीयते इति तादृशवाच्यव्यङ्ग्ययोर्भेदः सुतरां सिद्धः, यतो हि तेजस्तिमिरयोरिव तयोर्भ्रमणभ्रमणाभावयोर्विधिनिषेधरूपयोरेकत्वस्य वक्तुमशक्यत्वात् । तादृशव्यङ्ग्यार्थस्यैव चमत्कारजनकतया वस्तुध्वनिरत्र बोध्यः । इति वाच्यस्य विधित्वेन व्यङ्ग्यस्य निषेधरूपताया उदाहरणमिदं ज्ञेयम् ।

अथ वाच्यस्य प्रतिषेधरूपत्वे व्यङ्ग्यस्य विधिरूपताया उदाहरणं यथा—'श्वश्रूरत्र निमज्जति, अत्राहं दिवसकं प्रलोकय । मा पथिक ! रात्र्यन्धक ! शय्यायां मम निमाङ्क्षीः' इत्यत्र स्वगृहकृतनिवासं पथिकम्प्रति रिरंसां द्योतयितुं कापि प्रोषितभर्तृका कामुकी प्रतिपादयति—हे रात्र्यन्धक ! पथिक ! अत्रास्मिन् स्थाने श्वश्रूः निमज्जति वार्द्धक्येन निश्चेतनं शेते, अत्र तद्भिन्नस्थाने अहं स्वपिमि, तत् त्वं दिवसकं प्रलोकय दिने एव सम्यक् विलोकय, अन्यथा रात्रौ आवयोः श्वश्रूस्नुषयोः शय्यायां मा निमाङ्क्षीः, निःसंज्ञो मा पतेति भावः । अत्र शय्यायां पतनाभावरूपो निषेधः वाच्यभूतः, निमज्जनादिपदार्थमहिम्ना च मम शय्यायां निश्शङ्कं त्वया रात्रौ शयनीयमिति कामुकपथिकविजिहीर्षानुमानानन्तरमभ्यनुज्ञारूपो विधिर्व्यङ्ग्यतया प्रतीयते इति तयोर्वाच्यव्यङ्ग्ययोः स्पष्टमेव भेदः प्रतिपत्तव्यः ।

(५) प्रश्नः—वाच्यस्य प्रतिषेधत्वे व्यङ्ग्यस्यानुभयरूपतोदाहृत्य समर्थनीया।

उत्तरम्—'प्रार्थये तावत् प्रसीद निवर्तस्व, मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे !' इत्यत्र नायकः स्वापराधमवधार्य सङ्केतस्थलान्निवर्तमानां दयितां परावर्तयितुमनुनयति—हे मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! वदनेन्दुचन्द्रिकानिरस्तसमस्ततिमिरे ! त्वामहं प्रार्थये प्रसीद निवर्तस्व मा गच्छ, हे हताशे ! अन्यासामपि अभिसारिकाणां कान्तसमागमार्थं संकेतं निश्चितरहस्यस्थलं गच्छन्तीनां कामिनीनां मार्गे स्वकीयमुखचन्द्रप्रकाशकरणात् किमिति विघ्नं करोषि, रतिकार्येऽन्तरायमुपस्थापयसि, इति भावः । अत्र गमनप्रतिषेधरूपं

निवर्तनं वाच्यभूतं वर्तते, विधिनिषेधाभ्यामुदासीना नायकस्यानुनयात्मिका चाटूक्तिश्च व्यङ्ग्यतया प्रतीयते, इति स्पष्टमेव व्यङ्ग्यार्थवाच्यार्थयोः परस्परं भेदो नो अपाकर्तुं शक्यते इति भावः ।

(६) प्रश्नः—त्रिविधेषु ध्वनिषूत्तरोत्तरं तारतम्यबीजं प्रतिपाद्य 'स्वेच्छाकेसरिणम्' इत्यादिपद्ये त्रिविधान् ध्वनीन् विशदीकृत्यानुक्तनिमित्तायां विशेषोक्तौ, कार्यकारणभावेऽप्रस्तुतप्रशंसायाञ्च ध्वनेरनन्तर्भावः सोदाहरणं प्रदर्शनीयः ।

उत्तरम्—'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु', 'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' इति कारिकाभ्यां प्रतिपादितेषु सहृदयानां लोकोत्तरचमत्कारजनकेषु व्यङ्ग्यवस्त्वलंकाररसादिस्वरूपेषु त्रिविधेषु ध्वनिषु व्यङ्ग्यवस्त्वपेक्षया व्यङ्ग्यालंकाराणां प्राधान्येन शब्दार्थमयकाव्येषु लोकोत्तरचमत्कारजनकतया विच्छित्तिविशेषाधायकत्वस्य सहृदयहृदयवेद्यतया वैशिष्ट्यं प्रसिद्धमेव । परन्तु व्यङ्ग्यालङ्कारापेक्षयाऽपि व्यङ्ग्यरसादीनां वैशिष्ट्यन्तु विदग्धजनविदितं नापलपितुं पार्यते कथमपि, सहृदया एवैतद्विषये साक्षिणः सन्ति । अत एव उत्तममध्यमाधमभेदेन व्यङ्ग्यप्रधानध्वनि–गुणीभूतव्यङ्ग्य–चित्रात्मकेषु त्रिविधकाव्येषु आलङ्कारिकविद्वत्समाजसिद्धेषु सत्स्वपि पण्डितराजजगन्नाथेन रसध्वनेरुत्तमोत्तमरूपत्वं प्रतिपाद्य काव्यं चतुर्धा विभाजितम् । किञ्च सरसकाव्यनिर्माणेनैव कवेरप्यात्मलाभो भवति नान्यथा, तस्मात् प्रबन्धमुपनिबध्नता कविना सर्वात्मना रसपरतन्त्रेण भवितव्यम् । यतो हि नहि केवलं कवेरितिवृत्तमात्रनिर्माणेन किमपि प्रयोजनं सम्पद्यते इतिहासादेव तत्प्रसिद्धेः । अर्थात् कवेः काव्यनिर्माणस्य महाकविपदवीलाभः सहृदयहृदयाह्लादनपुरःसरं सदुपदेशश्चत्येतदुभयफलम् । तच्च रससन्निवेशमन्तरेण सर्वथा दुरासदेव । तदुक्तम्—'मुख्या व्यापारविषयाः सत्कवीनां रसादयः । तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः' । 'नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः । स तेनाकविरेव स्यादन्येनास्मृतलक्षणः' इति । एतावता रस एव काव्यस्य जीवनाधायकतया सारभूतपदार्थः । तथा च 'रसो वै सः' 'रसं ह्ययं लब्ध्वा आनन्दी भवति' इत्यादिश्रुतिप्रामाण्येन रसास्वादस्य ब्रह्मानन्दसहोदरत्वेन तस्यैव (रसस्यैव) ध्वनिभूतस्य व्यङ्ग्यवस्त्वलङ्कारापेक्षया

परमोत्कृष्टत्वं प्रतिपादितं भवति, सकलसत्काव्योपनिषद्भूतत्वञ्च सिध्यति ।

'स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः । त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः' । इत्यत्र भगवतः स्वेच्छाकेसरित्वेन प्राकृतसिंहापेक्षिको व्यतिरेकालङ्कारः, स्वाच्छन्द्यद्वारा परानियोज्यत्वेन परमैश्वर्यञ्च वस्तु ध्वन्यते । मधुरिपुपदेन खलनिग्राहकता, पराक्रमविशेषश्च व्यज्यते । तेन च पुनः प्रपन्नार्तित्राणौचित्यं, नखच्छायायाः स्वच्छत्वेन शशिकान्त्यपेक्षया वैलक्षण्यम्, इन्दुपदेन स्वीययावत्सुषमासाम्राज्यशालित्वं, प्रपन्नत्वेन शरणागतस्योपेक्षानर्हत्वम्, आर्तित्वेन झटित्युच्छेद्यत्वं, नखचन्द्रयोः स्वच्छत्वकौटिल्ययोगे तुल्येऽपि प्रपन्नार्तिच्छिदापाटवं नखेष्वेव नैव चन्द्रमसि इति व्यतिरेकालङ्कारश्च व्यज्यते । नित्योद्योगशालिनि भगवत्यपूर्वोत्साहदर्शनेन च वीररसः, समस्तवाक्येन भगवन्नृसिंहविषयकविनिष्ठरतिभावश्च व्यज्येते । इत्यञ्च वस्त्वलङ्काररसादिलक्षणस्त्रिरूपोऽपि ध्वनिरिह स्फुटमवगन्तव्यः ।

अनुक्तनिमित्ताया विशेषोक्तेः—'आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि । गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति' ॥ इत्युदाहरणे सहचरकृताह्वानादिहेतूनां सत्त्वेऽपि संकोचशिथिलीकरणरूपकार्याभावप्रयोजकस्य निमित्तस्य शैत्यकृतार्त्तेः प्रेयसीस्वप्नसमागमानुध्यानस्य वा यद्यपि प्रकरणवशात् व्यङ्ग्यतयैव प्रतीतिस्तथापि तदपेक्षयाऽपि तदुपपादितस्य संकोचशिथिलीकरणाभावरूपवाच्यार्थस्यैव सहृदयानां विच्छित्तिविशेषाधायकतया प्राधान्येन वाक्यार्थबोधविषयत्वमिति नैव ध्वनेरत्रान्तर्भावः संभवति ।

तथा कार्यकारणभावमूलकाप्रस्तुतप्रशंसायाः—'नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि । यदि कोमलता तवाङ्गकानामथ का नाम कथाऽपि पल्लवानाम्' एवम् 'आनम्य वल्गुवचनैर्विनिवारितोऽपि रोषात् प्रयातुमुदिते मयि दूरदेशम् । बाला कराङ्गुलिनिदेशवशंवदेन क्रीडाबिडालशिशुनाऽऽशु रुरोध मार्गम्' । इत्युदाहरणयोः क्रमशः सरोजमालादितिरस्कारात्मनः कार्यात् नायिकाङ्गमार्दवविशेषस्य कारणस्य, एवं मार्गरोधनात् कारणात् प्रवासान्निवृत्तेः कार्यस्य च व्यज्यमानतया तादृशव्यङ्ग्यार्थयोः कारणकार्यरूपयोः सत्त्वेऽपि सत्कार्यवादसिद्धान्ते कार्यकारणयोस्तादात्म्याङ्गीकारात् कार्यस्य प्राधान्ये कारणस्यापि प्राधान्यम्, एवं कारणस्य प्राधान्ये कार्यस्यापि प्राधान्यं स्वतः सिद्धमिति न तत्रापि ध्वनेरन्तर्भावसम्भावनेत्याकूतम् ।

(७) प्रश्नः—वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं।
मा तुज्झवि तीअ विणा दक्खिण्णहअस्स जाअन्तु॥
दे आ पसिअ णिवत्तसु मुहससिजोह्णाविलुत्ततमणिवहे।
अहिसारिआणं विग्घं करोसि अण्णाणं वि हआसे।
अस्मिन् पद्यद्वये प्रतीयमानार्थौ प्रतिपाद्येताम्।

उत्तरम्—'व्रज ममैवैकस्या भवन्तु निश्श्वासरोदितव्यानि। मा तवापि तया विना दाक्षिण्यहतस्य जनिषत' अत्र 'दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु' इति नयेनानिष्टस्यापि प्रियगमनस्य विधिर्वाच्यार्थः, 'त्वदीयं मनोऽत्यन्तं तस्यामासक्तमिति त्वं नितरां शठोऽसीति मयाऽवधारितमतो मदन्तिके स्थित्वाऽलं कृत्रिमदाक्षिण्यप्रकटनेनेति गाढमन्युरूपः खण्डितानायिकाऽभिप्रायोऽत्र व्यज्यते स हि व्यङ्ग्यार्थो न विधिरूपः, नापि निषेधरूपः, अपि तु तदुभयाभ्यामुदासीनस्तर्जनात्मको बोध्यः। एवं प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे!। अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे' इत्यत्र नायकः स्वापराधमवधार्य सङ्केतस्थलान्निवर्तमानां दयितां परावर्तयन् अनुनयति—अयि निराशे! स्वीयमुख-चन्द्रकान्त्या मार्गे तमोविध्वंसनेन यदन्यासामभिसारिकाणां विघ्नं करोषि तेन कस्त-वाभीप्सितलाभो भवति न कोऽपीति भावस्तस्मात् मदीयं गृहमागच्छ त्वदीयं वा गृहं गच्छाव इति विधिनिषेधाभ्यामुदासीनो दयितानुनयात्मको व्यङ्ग्यार्थः प्रतीयते।

(८) प्रश्नः—'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्। सभ्र-मरपद्माघ्रायिणि! वारितवामे! सहस्वेदानीम्' इति पद्ये विवक्षितो विषयः समुपपादनीयः।

उत्तरम्—अविनीतनायिकाया अधरे दन्तक्षतदर्शनेन नायकस्य तद्विषयकजार-कर्तृकत्वसन्देहनिवारणाय वाच्यकक्षायां ताम्प्रति व्यङ्ग्यकक्षायान्तु तत्पतिम्प्रति चतुर-सख्या उक्तिरियम्—'कस्य वा न भवति रोष' इत्यादि। अत्र मद्वारणमनादृत्य कृतस्य स्वकार्यस्य फलं भुङ्क्ष्व, न मयाऽत्र किमपि प्रतिविधातुं शक्यम्, इति तात्प-र्यकस्य वाच्यस्य नायिका प्रतिपाद्यभूता वर्तते, 'मया बहुशो निवारिताऽपीयं मत्सखी विपरीतस्वभावतया सभ्रमरं कमलमजिघ्रदिति भ्रमरेणैवास्या अधरो दष्टः, न तु जारपुरुषेण' इति व्यङ्ग्यार्थस्य प्रतिपाद्यस्तु निकटस्थस्तत्पतिरिति विषयभेदादपि तयोर्वाच्यार्थव्यङ्ग्यार्थयोर्भेदः सूपपादः। तदुक्तम्—'बोद्धृस्वरूपसंख्यानिमित्तकार्य-

प्रतीतिकालानाम् । आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः' इति ।

(९) प्रश्नः—'क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः'

अत्र कथंकारं क्रौञ्चवर्तिनः शोकस्य श्लोकात्मना परिणामः ?

उत्तरम्—नानाप्रकारकवाच्यवाचकरचनाप्रपञ्चरमणीयस्य काव्यस्य व्यङ्ग्यीभूत एवार्थो लोकोत्तरचमत्कारजनकतया जीवनाधायकोऽत एवादिकवेर्वाल्मीकेर्व्याधव्यापादितक्रौञ्चरूपकान्तवियोगेन विधुरायाः क्रौञ्च्या विलापश्रवणजनितः शोकः करुणरसस्थायिभावात्मकः श्लोकरूपेण परिणतः—'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' । इति । अत्र 'चर्वणा च सामाजिकानामेव सहृदयानामिति तेष्वेव रसः' इत्यस्य सिद्धान्तितत्वेन क्रौञ्चस्य शोकालम्बनविभावतायास्तत्रैवोक्तत्वेन शोकस्य तद्वृत्तित्वेन वक्तुमशक्यत्वात् अपि तु निहतसहचरविरहकातरायाः क्रौञ्च्या आक्रन्दनेनोत्पन्नश्चित्तवृत्तिविशेषरूपः मुनिवृत्तिशोक एवोक्तपद्यरूपेण परिणत इति भावः । स च शोकः करुणरसस्थायिभावरूपो व्यञ्जनया प्रतीयमान एव काव्यजीवनाधायको बोध्यः न तु वाच्यभूतः । न च मुनेः शोकाङ्गीकारे दुःखितया तद्वृत्तिशोकस्य दुःखसंपृक्तत्वेन आनन्दमयत्वाभावेन काव्यात्मत्वं न स्यादिति वाच्यम् ? मुनेर्दुःखित्वेऽपि चिदानन्दघनमयस्य रसादेः काव्यात्मत्वस्वीकारे क्षतिविरहात् । लौकिकस्य शोकस्योद्वेगजनकत्वेऽपि अलौकिकभावतापत्तिदशायामानन्दरूपत्वं हि सहृदयहृदयसम्मतम् । अन्यथा नहि कश्चित्सचेताः करुणरसादिप्रधानकाव्ये कथमपि प्रवर्तेत। रस्यमानतादशायामेव शोकस्य रसादिपदवाच्यतया व्यवहारात् । एवञ्च करुणावरुणालयस्य निरपराधनिहतक्रौञ्चविरहविधुरितक्रौञ्चाक्रन्दनश्रवणेनोद्विग्नस्य गाढशोकाविष्टस्य करुणरससमाहितचेतसः प्रतिभानवतः कवेर्वाल्मीकेः प्रथमं शोक एव हृदि करुणरसस्थायितामापन्नः, तं भावयतस्तस्य मुनेर्मनसि व्यङ्ग्यार्थस्य स्फुरणात् स एव शोकः श्लोकात्मना परिणत इति हृदयम् ।

(१०) प्रश्नः—ध्वनिमार्गे व्यङ्ग्यव्यञ्जकयोरेव प्राधान्येनान्तरङ्गतया वाच्यवाचकयोर्बहिरङ्गत्वेऽपि प्रथमोपादानप्रयोजनं प्रतिपाद्य 'भक्तिर्ध्वनिः' इति पक्षः केवलामव्याप्तिं प्रदर्श्य निराकरणीयः ।

उत्तरम्—यथाऽऽलोकार्थी जनः प्रकाशमभिलषन् प्रकाशकारणत्वेन दीपस्य कलिकायां वर्तिकादानतैलपूरणादिना यत्नवान् भवति, तथैव व्यङ्ग्यार्थप्रतीतिविषय-

कादरयुक्तो व्यङ्ग्यार्थं बुभुत्सुरिति यावत् तदुपायतया वाच्यार्थावगमे यत्नवान् भवतीति भावः। कार्यस्य प्राधान्येऽपि कारणोपादानं प्रागेव युक्तम्, नहि तावता तस्य (कार्यस्य व्यङ्ग्यार्थप्रत्ययस्य) प्राधान्ये काऽपि क्षतिर्दृष्टिगोचरीभवति इति हृदयम्।

तदुक्तम्—'आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः' इति ॥

लक्षणात्मिका भक्तिरूपा गौणीवृत्तिः ध्वनेर्लक्षणं न सम्भवितुमर्हति, अव्याप्त्यतिव्याप्त्यसम्भवरूपत्रिविधदोषरहितस्यैव लक्ष्यतावच्छेदकसमनियतस्य लक्षणस्य निर्दुष्टतयाऽभिधामूलविवक्षितान्यपरवाच्यवस्तुध्वनिप्रकारे, असंलक्ष्यक्रमव्यङ्ग्यरसभावादिध्वनिप्रकारे च भक्तेः संचाराभावेन ध्वनिरूपलक्ष्यैकदेशावृत्तितयाऽव्याप्तिदोषग्रस्तत्वेन तस्या भक्तेः ध्वनिलक्षणत्वस्य वक्तुमशक्यत्वात्। इदमत्र तत्त्वं—भक्तिर्नाम ध्वनेर्लक्षणं तदा स्यात् यदि सर्वत्रैव ध्वनिभेदेषु लक्ष्यरूपेषु भक्तिरूपलक्षणं सञ्चरेत् तदेव तु न सम्भवति, केवलमविवक्षितवाच्ये ध्वनिभेदे वाच्यार्थाविवक्षया भक्तेः सञ्चारेऽपि 'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः। सुमुखि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः' इत्यभिधामूलविवक्षितान्यपरवाच्यवस्तुध्वनौ 'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण'—इत्यादावभिधामूलविवक्षितान्यपरवाच्यासंलक्ष्यक्रमव्यङ्ग्यरसादिध्वनौ च संचाराभावेनाव्याप्तिदोषः स्पष्टमेवेत्यकूतम्। अव्याप्तिश्च लक्ष्यतावच्छेदकसामानाधिकरण्यविशिष्टलक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपा बोध्या। यथा भक्तिरूपध्वनिलक्षणे लक्षणामूलध्वनिदेशावच्छेदेन ध्वनित्वरूपलक्ष्यतावच्छेदकसामानाधिकरण्यस्य, अभिधामूलध्वनिदेशावच्छेदेन ध्वनित्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य च सत्त्वेन लक्षणसमन्वयो बोध्यः। तदुक्तं—'वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता। व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्' इति ॥

(११) प्रश्नः—'स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन्।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥
तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥
प्रकरणनिर्देशपूर्वकं व्याख्यायतां श्लोकद्वयमिदम्।

उत्तरम्—वाक्यार्थप्रतीतेः पदार्थप्रतीतिपूर्वकत्ववत् व्यङ्ग्यार्थप्रतीतेः वाच्यार्थप्रतीतिपूर्वकत्वेऽपि व्यङ्ग्यार्थस्य प्राधान्यं यथा न व्यालुप्यते तथा दर्शयति—स्वसामर्थ्यवशेनैवेत्यादि । अयमाशयः-स्वस्वोपस्थितपदार्थस्य सामर्थ्यवशेनाकाङ्क्षायोग्यताऽऽसत्तितात्पर्यज्ञानादिसहकारिसमवधानाधीनतया वाक्यार्थं प्रथयन्नपि वाक्यार्थबोधं जनयन्नपि यथा व्यापारनिष्पत्तौ वाक्यार्थबोधानुकूलक्रियासिद्धौ पदार्थो न विभाव्यते विशकलितरूपेण न ज्ञायते तद्वत् वाच्यार्थविमुखात्मनां वाच्यार्थस्य चमत्कृतिजनकत्वाभावेन तस्माद् वाच्यार्थाद् अपरितुष्यतां सचेतसां सहृदयानां तत्त्वार्थदर्शिन्यां सारार्थानुबन्धिन्यां बुद्धौ स व्यङ्ग्योऽर्थः झटित्येव वाच्यार्थप्रतीत्यव्यवहितोत्तरमेव भासते प्रतीयते। इदमत्रानुसन्धेयम्—तद्धर्मावच्छिन्नविषयताकशाब्दबुद्धित्वावच्छिन्नम्प्रति आकाङ्क्षायोग्यताऽऽसत्तितात्पर्यज्ञानसहकृततद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानाधीनपदजन्यपदार्थोपस्थितेः कारणतया यथा पदार्थोपस्थितियोग्यताज्ञानादिसहकारेण वाक्यार्थविषयकशाब्दबोधं जनयित्वा स्वयं विद्यमानोऽपि पदार्थः पृथगनवगम्यमानः प्राधान्यं न भजते तथैव व्यङ्ग्यार्थप्रतीतिजनकप्रतीतिविषयो वाच्यार्थः प्राधान्यं नाश्रयति, अपि तु गौणत्वमेवावलम्बते इति भावः ।

(१२) प्रश्नः—सविशेषणव्यावृत्ति-ध्वनिलक्षणमभिधाय तत्सामान्यप्रभेदयोरुदाहरणे विवक्षितार्थप्रतिपादनपुरस्सरं प्रदर्शयन्तु ।

उत्तरम्—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' ॥ अर्थात् यस्मिन् काव्येऽप्रधानीकृतस्वार्थौ शब्दार्थौ तं सहृदयहृदयाह्लादजनकं कमपि विलक्षणं व्यङ्ग्यार्थं व्यङ्क्तः व्यञ्जनया प्रकाशयतः स काव्यविशेषो ध्वनिरिति मौलार्थानुसारं व्यङ्ग्यविशिष्टशब्दार्थोभयत्वमेव ध्वनिकाव्यस्य निष्कृष्टं लक्षणमवसेयम् । वैशिष्ट्यञ्च स्वव्यञ्जकघटितत्व, स्वविषयकप्रतीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयत्व, एतदुभयसम्बन्धेन । तत्र समासोक्त्याद्यलङ्कारेषु ध्वनेरन्तर्भाववारणाय उपसर्जनीकृतस्वार्थावित्युक्तम् । तदर्थश्च—'व्यङ्ग्यार्थम्प्रति गौणीकृतस्वार्थौ' इति बोध्यः । तेन समासोक्त्याद्यलङ्कारेषु वाच्यार्थस्यैव प्रधानतया विच्छित्तिविशेषाधायकतया व्यञ्जनया प्रतीयमानव्यङ्ग्यार्थम्प्रति गौणत्वाभावेन न तत्र ध्वनेरन्तर्भावसम्भव इति भावः । स च ध्वनिर्द्विविधः—अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्च, इति सामान्यभेदः । तत्र प्रथमस्योदाहरणम्–'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥'

अत्र पृथिव्याः सुवर्णपुष्पस्य तच्चयनस्य चाप्रसिद्धेः 'सुवर्णपुष्पाम्' 'चिन्वन्ति' इति पदद्वयस्य वाच्यार्थबाधे प्रचुरतरधनानायासोपार्जनयोर्लक्षणायां व्यञ्जनया तत्प्रकर्षः प्राधान्येन व्यज्यते इति वाच्याविवक्षया वाक्यगतमविवक्षितवाच्यध्वनित्वं बोध्यम्। द्वितीयस्योदाहरणम्—

'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥'

अत्र पञ्चाग्नितीव्रतपांसि विना यदा त्वदधरसदृशबिम्बफलस्यास्वादोऽपि दुर्लभस्तदा का कथा त्वदधररसपानस्य, अर्थात् त्वदधररसपानं पुण्यातिशयलभ्यमिति व्यङ्ग्यार्थम्प्रति उक्तवाच्यार्थः उपसर्जनीभूतः, यतो हि तादृशव्यङ्ग्यार्थस्यैव वाच्यार्थापेक्षया सहृदयानां लोकोत्तरचमत्कारजनकतया प्रतीतिविषयता भवतीति विवक्षितान्यपरवाच्योऽत्र ध्वनिरिति हृदयम् ।

(१३) प्रश्नः—व्यङ्ग्ये वाच्यत्वं न संभवति इत्यत्र का वाचोयुक्तयस्ताः सुव्यक्तमुपपाद्यन्ताम् ।

उत्तरम्—'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥'

अर्थात् व्यञ्जनया प्रतीयमानं यद् व्यङ्ग्यवस्त्वलंकाररसादिरूपं महाकवीनां वाणीषु विभाति तद् वाच्यादन्यदेव न तु वाच्यरूपम् । तद्धि सहृदयहृदयवेद्यं त्रिशाखरूपं वस्तु प्रसिद्धावयवेभ्यो मुखनयनादिभ्यो व्यतिरिक्तमङ्गनासु लावण्यमिव वाच्येभ्यो विलक्षणमेव बोध्यम् । एवञ्च 'भ्रम धार्मिक ! विश्वस्त—' इत्यादौ वाच्यस्य भ्रमणस्य विधिरूपतया व्यङ्ग्यस्य भ्रमणाभावस्य निषेधरूपतया तेजस्तिमिरयोरिवानयोः परस्परं महाभेदेन व्यङ्ग्ये वाच्यत्वस्य वक्तुमशक्यत्वात् । एवं 'श्वश्रूरत्र निमज्जति'—इत्यादौ स्वशय्यायां प्रवेशाभावरूपस्य निषेधस्य वाच्यतया 'रात्रौ निःशङ्कं त्वया मम शय्यायामागन्तव्यम्' इत्यस्य विधिरूपस्य व्यङ्ग्यतया उभयोरत्यन्तभेदात् । तथा 'व्रज ममैवैकस्या भवन्तु निश्वासरोदितव्यानि' इत्यादावनिष्टप्रियगमनरूपविधेर्वाच्यतया तर्जनात्मकवस्तुनो विधिनिषेधाभ्यामुदासीनस्य व्यङ्ग्यतयोभयोर्भेदेन व्यङ्ग्ये वाच्यत्वस्योपपादयितुमनर्हत्वात् । एवं 'कस्य वा न भवति रोषः' इत्यादौ नायिकामुद्दिश्य वाच्यस्य, नायकमुद्दिश्य व्यङ्ग्यार्थस्य च प्रतिपादनात् प्रतिपाद्यभेदेनोभयोर्भेदात् । तथा च 'बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम् ।

आश्रयविषयादीनां भेदात् भिन्नोऽभिधेयतो व्यङ्ग्यः' । एवञ्च व्यङ्ग्यवत् व्यङ्ग्यालंकारोऽपि विधिनिषेध-तदुदासीनरूपत्वेनैव नानुगतः किन्तु बहुशाखः । एवं रस-भाव-तदाभास-तदुदय-शान्ति-सन्धि-शबलताध्वनिरूपो व्यङ्ग्यः वाच्यार्थवृत्तिव्यञ्जनया बोधितः सन्नेव प्रकाशते न तु साक्षात् शब्दव्यापाराभिधया वृत्त्या प्रकाशितो भवति, यदि अभिधयैव व्यङ्ग्यार्थः प्रकाश्येत तर्हि स्वशब्दवाच्योऽपि व्यङ्ग्यरसादिः स्यात्, न चैवं तथा दृश्यतेऽतो व्यङ्ग्ये वाच्यत्वं न संभवतीति भावः । नहि केवल-शृङ्गारादिशब्दभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति । यतश्च रसादिशब्देन स्वाभिधानमन्तरेणापि केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः । केवलाच्च स्वाभिधानादप्रतीतिः । तस्मादन्वयव्यतिरेकाभ्याम् अभिधेयसामर्थ्याक्षिप्तत्वमेव व्यङ्ग्यरसादीनां न तु वाच्यत्वं कथञ्चिदित्याकूतम् ।

(१४) प्रश्नः—गुणालंकारेषु ध्वन्यन्तर्भावप्रक्रियां प्रदर्श्य खण्डयतु, ध्वनिस्वरूप प्रदर्शनपूर्वकं तत्प्रभेदान् वा संक्षिप्य दर्शयतु । समासोक्त्यादिषु च ध्वन्यन्तर्भावो विशेषरूपेण खण्डनीयः ।

उत्तरम्—माधुर्यादिगुणेभ्य उपमाद्यलंकारेभ्यश्च विलक्षणः कश्चित् ध्वनिर्नाम पदार्थो नैव संभाव्यते, विच्छित्तिविशेषाधायकस्य तस्य संभावितस्य ध्वनेरुक्तेष्वेव गुणालंकारेषु चारुत्वहेतुषु अन्तर्भावसंभवात्, अर्थात् अलंकाराद्यपेक्षया चमत्कार-विशेषाकरणात् ध्वनिस्तेष्वेव गुणालंकारेष्वन्तर्भवति न तु तेभ्यो विलक्षण इति पूर्वपक्षाशयः, तदुक्तं—'कामनीयकमनतिवर्तमानस्य तस्योक्तालंकारादिप्रकारेष्वेवान्तर्भावः' इत्यादिः । स च न युक्तः—'वाच्यवाचकमात्राश्रयेषु उपमाद्यलंकारेषु वर्णपदवाक्य-प्रभृतिनानाविधव्यङ्ग्य-व्यञ्जकभावसमाश्रयणेन व्यवस्थितस्य ध्वनेरन्तर्भावस्य वक्तुमशक्यत्वात् । उभयोर्विभिन्नाश्रयत्वात् । एवं गुणेषु रीतिषु च न तस्यान्तर्भाव-संभवः । तदुक्तम्—'व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः । वाच्यवाचकचारुत्व-हेत्वन्तःपातिता कुतः' इति । किञ्चालंकारादिषु न ध्वनेरन्तर्भावः संभवति यतो हि ध्वनिनामोत्तमः काव्यविशेषोऽङ्गी, गुणालंकारवृत्तयस्तु तस्य ध्वनेरङ्गान्येव, तथा चाङ्गिनोऽङ्गे कथमन्तर्भावसंभावना, अलंकार्यालंकारयोरुपकार्योपकारकयोर्वा तादात्म्यानङ्गीकारात् । एवञ्च गुणालंकारवृत्तीनां ध्वनेरङ्गभूतत्वान्नैव तत्र ध्वनेरन्तर्भावसम्भवः । समासोक्त्यादिषु च नैव विशिष्य ध्वनेरन्तर्भावः सम्भवति, तथाहि—वाच्यमात्रानुयायिनामुपमासमासोक्त्याद्यलंकाराणां वाच्यरूपेणैव प्रधानतया विच्छित्तिविशेषाधाय-

कत्वेन व्यङ्ग्यस्याप्राधान्यात् तेषु प्रधानीभूतलोकोत्तरचमत्कृतिजनकव्यङ्ग्यस्वरूपध्वनेरन्तर्भावो न भवितुमर्हति । तदुक्तम्— व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः । समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः । व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते' । इति, अपि तु 'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यम्प्रति स्थितौ । ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः' इति कारिकानुसारं व्यङ्ग्यार्थस्य प्राधान्ये एव ध्वनिव्यवहारो भवतीति भावः ।

अथ सभेदं ध्वनिरूपं प्रदर्श्यते—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' इति कारिकानुसारं 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु' इति कारिकानुसारञ्च अस्मिन् काव्ये शब्दार्थापेक्षया प्राधान्येन लोकोत्तरचमत्कारशालितया सहृदयहृदयाह्लादजनको व्यङ्ग्यार्थः प्रतीयते तदेव ध्वनिकाव्यस्वरूपमिति भावः । एवञ्च 'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यम्प्रति स्थिताविति' उपर्युक्तकारिकया यत्र काव्ये प्राधान्येन व्यङ्ग्यप्रत्यायनतात्पर्येणैवोपात्तौ शब्दार्थौ व्यङ्ग्यार्थोपस्कारकतया तत्परायणौ स्तः स एव, न त्वप्रधानव्यङ्ग्योऽपि, संकरेण अलंकारमिश्रणेन रहितः शुद्ध इति यावत् ध्वनेर्विषयो ज्ञातव्यः ।

तस्य च ध्वनेः प्रधानतयाऽष्टादश भेदाः सन्ति, तथा हि लक्षणामूलोऽविवक्षितवाच्यो ध्वनिर्द्विविधः—अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च, एवमभिधामूलो ध्वनिः प्रथमं द्विविधः—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च, तत्र असंलक्ष्यक्रमव्यङ्ग्यस्तावत् व्यङ्ग्यरसादिरूपः स्थूलरूपेण हि एकविध एव, संलक्ष्यक्रमव्यङ्ग्यश्च-शब्दशक्त्युद्भव, अर्थशक्त्युद्भव, शब्दार्थोभयशक्त्युद्भवभेदेन त्रिविधः, तत्र शब्दशक्त्युद्भवश्च व्यङ्ग्यवस्त्वलंकारभेदेन द्विविधः । अर्थशक्त्युद्भवश्च-स्वतःसंभविकविप्रौढोक्तिसिद्ध-कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्त्वलंकारव्यङ्ग्य-वस्त्वलङ्कारभेदेन द्वादशविधः । शब्दार्थोभयशक्त्युद्भवश्चैकविध एवेति सर्वेषां संकलनया अष्टादश भेदा भवन्ति । तत्र लक्षणामूलध्वनेरुदाहरणम्—'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्' । इति बोध्यम् । अभिधामूलविवक्षितान्यपरवाच्यध्वनेरुदाहरणम्—

'शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत् तपः ।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुककशावकः' ॥ इति बोध्यम् ।

(१५) प्रश्नः—ध्वनेः समासोक्त्यादिषु अन्तर्भावाभावं सविशदं प्रतिपादयत ।

उत्तरम्—'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्' ॥

इत्यादि समासोक्त्युदाहरणे समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव विच्छित्तिविशेषाधायकतया प्राधान्येन वाक्यार्थबोधविषयत्वेन व्यङ्ग्येनोपस्कृतस्य वाच्यार्थस्यैव प्राधान्यात् व्यङ्ग्यार्थस्य गुणीभावात् न तत्र ध्वनेरन्तर्भावः संभवति । एवं 'स्मरशरशतविधुरायाः भणामि सख्याः कृते किमपि । क्षणमिह विश्रम्य सखे ! निर्दयहृदयस्य किं भणाम्यथवा ।' इत्यादावाक्षेपेऽपि व्यङ्ग्यार्थस्य वाच्यबोधनिर्वाहकतया गुणीभावात् 'अवश्यवक्तव्यनायिकादयनीयदशारूपव्यङ्ग्य'-विशेषाक्षेपिणो वाच्यस्यैव प्राधान्येन लोकोत्तरचमत्कारजनकत्वेन व्यवस्थानात् न तत्रापि ध्वनेरन्तर्भावसंभवः । एवं 'गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः । विप्रा न भुञ्जते'—इत्यादि पर्यायोक्तेऽपि रसदाननिषेधरूपव्यङ्ग्यार्थापेक्षया ब्राह्मणभुक्तावशिष्टान्नभक्षणरूपवाच्यवाच्यार्थस्यैव सहृदयहृदयहारितया चारुत्वेन व्यवस्थानात् न तत्रापि ध्वन्यन्तर्भावसंभवः । यदि तु 'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य । आलिङ्गनोद्दामविलासवन्ध्यम्'—इत्यादौ कदाचित् व्यङ्ग्यस्य प्राधान्यं तदा ध्वनेरत्यन्तव्यापकतया 'सर्वे पदा हस्तिपदे निमग्ना' इति नयेन तस्य ध्वनावेवान्तर्भावो भवतु न तु तत्र ध्वनेरन्तर्भावः संभवति । एवं 'चन्द्रमयूखैर्निशा'-इत्यादिदीपकोदाहरणे 'एतद्धि न तपः सत्यमिदं हालाहलं विषम्' इत्याद्यपह्नुतौ च व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि वाच्यार्थस्यैव चमत्कारविशेषाधायकतया चारुत्वोत्कर्षनिबन्धनैव वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा भवतीति व्यङ्ग्यभूतोपमायाः प्राधान्येनाविवक्षितत्वात् न तत्र ध्वनेरन्तर्भावः । तथा 'आहूतोऽपि सहायैः'-इत्यनुक्तनिमित्तायां विशेषोक्तौ व्यङ्ग्यस्य प्रकरणसामर्थ्यगम्येऽपि तस्याप्राधान्यात् न तत्र ध्वन्यन्तर्भावः । अप्रस्तुतप्रशंसायामपि वाच्यव्यङ्ग्ययोः समप्राधान्येन न तत्रापि ध्वन्यन्तर्भावः । सङ्करालंकारेऽपि यदाऽलंकारोऽलंकारान्तरच्छायामनुगृह्णाति तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वात् न ध्वनिविषयत्वम् । अलंकारद्वयसंभावनायान्तु वाच्यव्यङ्ग्ययोस्तुल्यप्रधानतया ध्वनेर्नितरामसंभवः । इत्थञ्च समासोक्त्यादिषु कथमपि ध्वनेरन्तर्भावो न भवितुमर्हतीति सारम् ।

(१६) प्रश्नः—आक्षेपपर्यायोक्तयोर्दीपकापह्नुत्योर्वा ध्वनेरनन्तर्भाव उदाहरणप्रदर्शनपुरस्सरं प्रतिपादनीयः ।

उत्तरम्—'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः' इति लक्षणलक्षितस्य द्विविधस्याक्षेपस्य 'स्मरशरशतविधुराया भणामि सख्याः कृते किमपि। क्षणमिह विश्रम्य सखे! निर्दयहृदयस्य किं भणाम्यथवा' 'तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्। हन्त! नितान्तमिदानीमाः! किं हतजल्पितैरथवा' इत्युदाहरणयोः वाच्यभूतेनेष्टवचननिषेधेन बाधास्कन्दिततया निषेधाभासत्वेन पर्यवस्यता स्वोपपादकत्वेनाङ्गभूत एव विधिशबलो वक्तव्यवैलक्षण्यवैभवरूपो व्यङ्ग्यार्थो व्यञ्जनया द्योत्यते, तथा चोक्तव्यङ्ग्यार्थापूरणमन्तरा बाधास्कन्दितत्वेन वाच्यार्थबोधस्य निष्पत्त्यभावात् व्यङ्ग्यस्य वाच्यार्थबोधनिर्वाहकतया गुणीभूतत्वात् नात्र ध्वनेर्विच्छित्तिविशेषाधायकस्यान्तर्भावः सम्भवति।

एवं 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्' इति लक्षणलक्षितस्य पर्यायोक्तस्य—'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य। आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्' इत्युदाहरणे विधुन्तुदमस्तकच्छेदनरूपव्यङ्ग्यार्थस्य कारणभूतस्य नैव तादृशी सहृदयहृदयहारिता, यादृशी वाच्यभूतस्यालिङ्गनविलासरहितचुम्बनमात्रशेषरतोत्सवरूपतत्कार्यस्य, इति प्राधान्येन लोकोत्तरचमत्कारशालिनो ध्वनेर्नात्रान्तर्भावसम्भवः, तदपेक्षया वाच्यार्थस्यैव रमणीयतया भानेनाप्रधानतया विवक्षितत्वाभावात्। यदि कदाचित् तादृशव्यङ्ग्यार्थस्यैव प्राधान्येन विच्छित्तिविशेषाधायकत्वं सहृदयैरनुभूयते तदापि ध्वनेर्महाविषयतया व्यापकत्वेन तत्रैव व्याप्यभूतस्य पर्यायोक्तस्यान्तर्भावः समुचितः। न तु व्यापकस्य ध्वनेस्तत्रान्तर्भावो युक्तः। वस्तुतस्तु पर्यायोक्ते व्यङ्ग्यस्य प्राधान्यमेव नास्ति, इति का सम्भावना ध्वन्यन्तर्भावस्य, तथा हि भामहेन प्रतिपादिते—'गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः। विप्रा न भुञ्जते' 'इति पर्यायोक्तोदाहरणे रसदाननिषेधरूपव्यङ्ग्यार्थस्याचारुतायाः स्पष्टत्वात्। अत एव भामहेनैव 'तच्च रसदाननिवृत्तये' इति चतुर्थचरणपूरणद्वारा व्यङ्ग्यार्थः स्फुटीकृत इति भावः।

दीपकापह्नुत्योस्तु व्यङ्ग्यत्वेनौपम्यस्य प्रतीतावपि प्राधान्येन तस्य विवक्षितत्वाभावेन न तेन व्यपदेशः, अपि तु वाच्यभूतदीपकादेरेव प्राधान्येन व्यपदेशो भवति, तथाहि 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' इति लक्षणलक्षितस्य दीपकस्य—'संजहार शरत्कालः कदम्बकुसुमश्रियः। प्रेयोवियोगिनीनाञ्च निश्शेषसुखसम्पदः' इत्युदाहरणे कदम्बकुसुमश्रियां विरहिणी-

सुखसम्पदाश्च परस्परमौपम्यस्य व्यज्यमानत्वेऽपि तदपेक्षया शरत्कालकर्तृकसंहरणैकधर्मान्वितप्रस्तुताप्रस्तुतताद‍ृशकदम्बपुष्पलक्ष्मी-वियोगिनीसुखसम्पदात्मकधर्मिरूपदीपकस्यैव वाच्यभूतस्य चमत्कारितया प्राधान्यात्, तेनैव व्यवहारो न तु व्यङ्ग्यभूतौपम्येन ।

एवं 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् । साम्यादपह्नुतिः' इति लक्षणलक्षितायाः अपह्नुतेः—'एतद्धि न तपः सत्यमिदं हालाहलं विषम् । विशेषतः शशिकलाकोमलानां भवादृशाम्' इत्युदाहरणे 'तपो हालाहलमिव' इत्यौपम्यस्य ध्वन्यमानत्वेऽपि तपोरूपोपमेयापह्नवपूर्वकहलाहलविषरूपोपमानस्थापनात्मकस्य वाच्यभूतस्यापह्नुत्यलंकारस्यैव विच्छित्तिविशेषाधायकतया प्राधान्यात् तेनैव व्यपदेशो न तु तादृशव्यङ्ग्यमानौपम्येन इति दीपकापह्नुतिस्थलेऽपि व्यङ्ग्यस्य गुणीभूतत्वेन न तत्रापि ध्वनेरन्तर्भावः संभवतीति हृदयम् ।

(१७) प्रश्नः—विशेषोक्तौ, सन्देहसंकरे, सारूप्यनिबन्धनाप्रस्तुतप्रशंसायाञ्च वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये सोदाहरणे निर्दिश्य तत्र ध्वनेरनन्तर्भावः प्रदर्शनीयः ।

उत्तरम्—'आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि । गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति' इत्यत्रानुक्तनिमित्तायां विशेषोक्तौ मित्रकृताह्वानादिकारणानां सत्त्वेऽपि संकोचशिथिलीकरणरूपकार्याभावप्रयोजकस्य निमित्तस्य शैत्यकृतार्त्तेः प्रेयसीस्वप्नसमागमानुध्यानस्य वा यद्यपि प्रकरणसामर्थ्यात् व्यङ्ग्यतयैव प्रतीतिर्भवति, तथापि तदपेक्षया तदुपपादितस्य संकोचशिथिलीकरणाभावरूपवाच्यस्यैव प्रधानतया सहृदयानामाह्लादजनकतया चमत्कारित्वमिति नात्र ध्वनेरन्तर्भावः संभवति ।

एवम् 'एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः' इति राजानकमम्मटोक्तेरलंकाराणामेकतमपरिग्रहे साधकबाधकप्रमाणाभावात् समवाये सन्देहरूपसंकरस्य—'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति । अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः' इत्युदाहरणे मदनोद्दीपकः कालोऽयं वर्तते किमिति पर्यायोक्तम्, वदनमिन्दुबिम्बतयाऽध्यवसितमित्यतिशयोक्तिर्वा, अथवैतन्निर्दिष्टे वदने चन्द्रबिम्बत्वारोपात् रूपकं, किमुत तयोः समुच्चयविवक्षया दीपकम्, इत्येवं नानालंकारसंकरे प्रधानगुणभावयोः, वाच्यव्यङ्ग्ययोश्च निश्चेतुमशक्यतया तयोर्व्यङ्ग्यार्थस्य विच्छित्तिविशेषाधायकत्वनिर्णयाभावेन तुल्यप्रधानतया लोकोत्तरचमत्कारशालिव्यङ्ग्यार्थप्रधानध्वनेरन्तर्भावासंभवात् । 'भवति न कुमुदरागो कमलं केवलं प्रतिद्विशरणानाम् । किन्न प्रस्नौति शशिमणिश्चन्द्रे न

'प्रियामुखे दृष्टे' इत्यादौ संकरे क्वचित् व्यतिरेकापह्नुत्योः प्रधानतया प्रतीयमानत्वेन व्यङ्ग्यार्थप्राधान्येऽपि ध्वनेर्महाविषयतया तस्यापि ( संकरस्यापि ) ध्वनावेवान्तःपातो भवतु, नतु ध्वनेस्तत्रान्तःपातो युक्तः। वस्तुतस्तु नीरक्षीरवदलंकारमिश्रणे हि संकरो भवति, नहि मिश्रणे कस्यचिन्मुख्यत्वं कस्यचिच्च गौणत्वञ्च शक्यमवगन्तुम्, व्यङ्ग्यप्राधान्यानिश्चये च कुतो ध्वनेः संभावनेति हृदयम्।

सारूप्यनिबन्धनाप्रस्तुतप्रशंसायाः—'आबद्धकृत्रिमसटाजटिलांशभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा। मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य' इत्युदाहरणेऽप्रस्तुतस्य वाच्यस्य शुनो निन्दया वेदमूलरचनाया आडम्बरेण विद्वद्वरेष्वपत्यभिनयतोऽभिमानशीलस्य मूर्खस्य प्राकरणिकतया गर्हा व्यज्यते सारूप्यक्षेपयोः सम्बन्धः। तत्र यदि वाच्यस्याप्रस्तुतत्वात् कदाचिदप्राधान्यं व्यङ्ग्यस्य च प्रस्तुतत्वेन प्राकरणिकतया प्राधान्येन विच्छित्तिविशेषाधायकत्वं सहृदयैरनुभूयते तदा तस्य एव ध्वनावन्तःपातो भवितुमर्हति न तु ध्वनेर्विशालस्य तत्रान्तःपातः संभवति। एवं वाच्यव्यङ्ग्ययोः प्रस्तुतस्थलेऽपि अयमेव पन्था बोध्यः। प्रस्तुतस्य व्यङ्ग्यस्य विच्छित्तिविशेषाजनकतयाऽप्राधान्ये तु अलंकारत्वव्यवहार एव भवति न तु ध्वनित्वं व्यङ्ग्याप्राधान्यात्।

(१८) प्रश्नः—त्रिविधेषु संकरालंकारेषु ध्वनेरनन्तर्भावं विशदीकृत्य तत्र क्वचित् प्रतीयमानस्य प्राधान्यं सभवति न वेति स्फुटीक्रियताम्।

उत्तरम्—'नीरक्षीरनयायत्र सम्बन्धः स्यात् परस्परम्। अलंकृतीनामेतासां संकरः स उदाहृतः॥' इत्युक्तलक्षणस्य संकरस्य—'अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ। संदिग्धत्वे च भवति संकरस्त्रिविधः स्मृतः'॥ इति त्रिधा विभक्तस्यालब्धस्वातन्त्र्याणामलंकाराणामनुग्राह्यानुग्राहकभावेऽङ्गाङ्गित्वनामकसंकरस्य—'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः। तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः'॥ इत्युदाहरणे पार्वती–मृगीप्रेक्षणयोर्व्यज्यमानोपमा वाच्यभूतस्य ससंदेहालंकारस्य सुषमां तनोतीत्यङ्गमेव न तु प्रधानम्, अतो न ध्वनेस्तत्र प्रवेशः संभवति। एवमलंकाराणां सन्देहात्मकसंकरस्य—'नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति। अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः'॥ इत्युदाहरणे कामोद्दीपकः कालोऽयं वर्तते किमिति पर्यायोक्तम्, वदनमिन्दुबिम्बतयाऽध्यवसितमित्यतिशयोक्तिर्वा इत्येवं नानालंकारसन्देहसंकरे गुणप्रधानभावयोर्वाच्यव्यङ्ग्यतयोश्च निश्चेतुमशक्यतया ध्वने-

रन्तर्भावासंभवात् । एवमेकवाचकानुप्रवेशात्मकसंकरेऽपि सर्वथा प्रतीयमानस्य प्राधान्याभावात् न ध्वनिप्रवेशसंभावना । यदि च 'भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् । किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे' ॥ इति संकरे वाच्यस्य अर्थान्तरन्यासस्याङ्गत्वेऽपि व्यतिरेकापह्नुत्योस्तु अतिचारुत्वेन व्यज्यमानत्वात् अङ्गित्वमेवेति व्यङ्ग्यस्य प्राधान्यमेवेत्युच्यते तदा तस्यापि ध्वनावेवान्तःपातोऽस्तु न तु ध्वनेस्तत्रान्तःपातः । अर्थात् यथा ध्वनेर्महाविषयतया पर्यायोक्ते नान्तर्भावः किन्तु तदेवालंकारध्वनिनाम्ना ध्वनावन्तर्भूतं तथैवात्रापि तादृशसंकरस्यैव ध्वनौ प्रवेशः संभवतीति भावः । वस्तुतस्तु नीरक्षीरवदलंकारमिश्रणे हि संकरो भवति, न च मिश्रणे कस्यचित्प्रधानत्वं कस्यचिच्चाप्रधानत्वं वा शक्यमवगन्तुम् । व्यङ्ग्यार्थप्राधान्यानवगमे च कुतो विच्छित्तिविशेषाधायकस्य ध्वनेः संभावनेति सारम् ।

(१९) प्रश्नः—भक्तिस्वरूपं निरूप्य ध्वनेर्भाक्तत्वं निराकुरुत ।

उत्तरम्—'भक्तिरेव ध्वनिः' इति भाक्तत्ववादिनां मतम् । तत्र भज्यते सेव्यते प्रसिद्धतया उद्घोष्यते इति व्युत्पत्त्या भक्तिर्नाम—'अभिधेयेन सारूप्यात् सामीप्यात् समवायतः । वैपरीत्यात् क्रियायोगाद् लक्षणा पञ्चधा मता' इत्यभियुक्तोक्ता पञ्चप्रकारा उपचारविशेषात्मिकाऽभिधामूला लक्षणाऽपरपर्याया समारोपिता गौणी वृत्तिः । तादृशगुणवृत्त्यैव व्यङ्ग्यार्थस्यापि बोधसम्भवेऽलं व्यञ्जनया इति भाक्तत्वपक्षाभिप्रायः । तत्र समाधीयते–ध्वनिलक्षणयोर्भिन्नरूपत्वेन तादात्म्यासम्भवात् । तथाहि वाच्यवाचकव्यतिरिक्तस्य व्यङ्ग्यार्थस्य यत्र व्यङ्ग्यप्रधानकाव्ये वाच्यवाचकाभ्यां व्यञ्जनया द्योतनं भवति स ध्वनिः । भक्तिस्तु शक्यतावच्छेदकप्रकारक आरोपरूपोपचार इत्युभयोर्महाभेदेन एकत्वस्य वक्तुमशक्यत्वात् । तदुक्तं—'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिरि'ति ।

न च भक्तेस्तादृरूप्यासम्भवेऽपि ध्वनिलक्षणत्वमेव स्वीक्रियत इति वाच्यम् ? गुणवृत्तिस्वरूपाया भक्तेः ध्वनिलक्षणत्वाङ्गीकारे असाधारणधर्मस्यैव लक्षणतया 'परिम्लानं पीनस्तनजघनसंगादुभयतः'—इत्यादौ ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सत्त्वेनातिव्याप्तेः । तथा अभिधामूलध्वनिस्थले—'शिखरिणि क्व नु नाम कियच्चिरम्—' इत्यादौ भक्तेरसत्त्वेन अव्याप्तेश्च भक्तेर्ध्वनिलक्षणत्वासम्भवात् । तथाऽभिधाश्रयाया भक्तेः व्यञ्जनैकमूलस्य ध्वनेर्लक्षणत्वस्य वक्तुमशक्यत्वाच्च । तदुक्तम्—'वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता । व्यञ्जकैकत्वमूलस्य ध्वनेः स्याल्लक्षणं कथम्' इति ॥ तस्माद्

ध्वनिरन्यः, भक्तिर्ध्वान्देति सारम्। एतेन 'भक्तिर्ध्वनिरिति मतमुपवर्ण्य' 'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः' इति 'ग्रन्थाशयविशदीकरणेन निराकुरुत' इत्यादयः सर्वेऽपि प्रश्नाः समाहिता भवन्ति। 'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः। अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' ॥ इति कारिका सोपक्रमं व्याख्यायताम् इति प्रश्नश्च समाहितो भवति। एतद्विषयकाणां सर्वेषामपि प्रश्नानामुक्तोत्तरेणैव गतार्थत्वात्।

(२०) प्रश्नः—'अज्जाएं पहारो णवलदाए दिण्णो पिएण थणवट्टे।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥

इति पद्ये विवक्षितं विषयं प्रतिपाद्य, व्यङ्ग्यार्थसम्पर्कोऽस्ति न वा? अस्ति चेत्, तस्य चमत्कारित्वं कथं न? इति विशदं प्रतिपादयत।

उत्तरम्—'कनिष्ठभार्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे।
मृदुकोऽपि दुस्सह इव जातो हृदये सपत्नीनाम् ॥'

इत्यस्यायमाशयः—कनिष्ठभार्याया यवीयस्याः प्रेयस्याः स्तनपृष्ठे कुचतटे प्रियेण वल्लभेन नवलतया मृदुकोऽपि कोमलतया सुसहोऽपि दत्तः विहितः प्रहारः सपत्नीनां हृदये दुस्सह इव सञ्जातः इति भावः। अत्र कनिष्ठत्वं नायिकानिष्ठं वयःकृतमेव विवक्षितं न तु स्नेहकृतम्। तस्यां (यवीयस्यां) प्रेमातिशयस्य व्यञ्जनायैव कविना प्रहारस्य सपत्नीहृदयदुःसहत्वेनोपनिबद्धत्वात्। एवञ्च प्रकृते दाधातोः स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपमुख्यार्थस्य बाधात् विधाने लक्षणा बोध्या। तथा च नायककृतकनिष्ठप्रेयसीस्तनमृदुलप्रहारस्यापि सपत्नीनां दुस्सहत्वप्रतिपादनेन सपत्न्यपेक्षया यवीयस्याः प्रेयस्याः प्रेमातिशयस्य व्यङ्ग्यार्थस्य द्योतनेऽपि तादृशव्यङ्ग्यार्थात् विभावना–विशेषोक्ति–सङ्करासङ्गत्युत्प्रेक्षाणां वाच्यालङ्काराणामेव सहृदयहृदयाह्लादजनकतया प्राधान्येन चमत्कारित्वप्रतीतेः व्यङ्ग्यस्य चमत्कारित्वाभावात्। एवञ्चैतादृशोदाहरणेष्वपि भक्तिरूपलक्षणाया विषयत्वस्य सत्त्वेनोपर्युक्तव्यङ्ग्यार्थस्यात्यन्तस्फुटतया वाच्यायमानत्वेन 'नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः। अर्थो गिरामपिहितः पिहितश्च शश्वत् सौभाग्यमेति मरहट्टवधूकुचाभः' ॥ इत्यभियुक्तोक्तेरीषद्गूढस्यैव व्यङ्ग्यस्य चारुतानिर्धारणेनोक्तव्यङ्ग्यस्यात्र चारिमप्रकर्षाभावाच्च ध्वनिविषयतेति हृदयम्। तदुक्तम्—

'उक्त्यन्तरेणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत् ॥' इति।

(२१) प्रश्नः—ध्वनेरनिर्वचनीयतां खण्डयन्तु ।

उत्तरम्—ये खलु पराक्षेपदूरीकरणासमर्थतया ध्वनिलक्षणकरणाद् विमुखाः सन्तः सहृदयहृदयप्रतीतिगोचरमात्रस्य लोकोत्तरचमत्कारशालिनो ध्वनेरनिर्वचनीयतामेव प्रतिपादयन्ति, ते सर्वथाऽविविच्य वक्तार एव प्रतिभान्ति, यतः 'यत्रार्थः शब्दो वा' इत्यादिना सामान्यरूपेण 'प्रतीयमानं पुनरन्यदेव' इत्यादिना 'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्' इत्यादिना च विशेषरूपेण ध्वनेः स्वरूपस्य प्रतिपादने कृतेऽपि यदि तस्यानिर्वचनीयत्वं स्यात्तर्हि सर्वेषामपि कृतलक्षणानां वस्तूनामनिर्वचनीयत्वमापद्येत । रामायणमहाभारतादौ बहुत्र लक्ष्ये प्रसिद्धव्यवहारस्यास्य ध्वनेरपलपितुमशक्यत्वात् । एतावता यस्य ध्वनेः स्वरूपं हि सकलसत्कविकाव्योपनिषद्भूतं चिरन्तनकाव्यलक्षणविधायिनामत्यन्तसूक्ष्माभिः सुबुद्धिभिः प्रागप्रकाशितं रमणीषु मुखनयननितम्बजघनाद्यवयवातिरिक्तं पृथङ् निर्वर्ण्यमानं लावण्यमिव सहृदयहृदयाह्लादकं किमपि विलक्षणमेव विलसति, तस्य ध्वनेरनिर्वचनीयत्वकथनं केवलं स्वस्याल्पज्ञतासूचकमेवेति भावः । यत्कृपयैव महाकवीनां महाकविपदवीलाभो भवति, यस्मिंश्च सत्येवातिविचित्रकविपरम्परावाहिनि अस्मिन् संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा कवयो गण्यन्ते न तु सर्वेऽपि, तस्य ध्वनेः कथमनिर्वचनीयत्वं स्यात् ! तदुक्तं—'सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् । अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्' ॥ इति । 'वाग्धेनुर्दुग्ध एकं हि रसं यद्बालतृष्णया । तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः ॥' इति भट्टनायकोक्तिश्च विलक्षणं ध्वनिं निर्वक्ति । तदेवं ध्वनेर्निर्वचनस्य सम्भवेऽपि अनिर्वचनीयत्वकथनमसङ्गतमेवेति भावः । यदि तु ध्वनेरनयाऽतिशयोक्त्या गुणीभूतव्यङ्ग्य-चित्रकाव्यापेक्षया विच्छित्तिविशेषाधानेन वाच्यार्थातिशायिविलक्षणस्वरूपाभिधाने एवानिर्वचनीयत्ववादिनां तात्पर्यं तर्हि तेऽपि युक्ताभिधायिन एव सन्ति, सर्वथा सिद्धध्वनिसिद्धान्तस्वीकारादिति प्रघट्टकार्थः ।

(२२) प्रश्नः—कदा कस्मिन् प्रदेशेऽभूदयमानन्दवर्धनः । एतद्विनिर्मिताः के के ग्रन्थाः सन्तीति घोष्यताम् ?

उत्तरम्—राजानकोपाधिविभूषितः कविरानन्दवर्धनाचार्यः काश्मीरदेशोद्भवो भूसुरवंशावतंसः, भट्टनोणस्यात्मजः काश्मीरराज्यशासकावन्तिवर्मनृपतेः सभापण्डितः आसीत् । कविरयमलौकिकस्वप्रतिभाबललब्धवैदुष्येण सभापण्डितेषु प्रधानपण्डित-

पदवीं प्राप्य सद्योऽनवद्यहृद्यविविधविधविद्यावाक्पाटवेनावन्तिवर्मनृपतिं नितरामतूतुषत्। विद्वद्धौरेयोऽयं नितरां प्रौढिशालिना मार्मिकशब्देन साहित्यशास्त्रस्य सकलविषयोपनिषद्भूतं ध्वनितत्त्वसिद्धान्तं निर्भ्रान्तं तथाऽतिष्ठिपत्, येन समस्तप्रसिद्धकाव्यसम्बन्धिसिद्धान्ता ध्वनिकुक्षावेवान्तर्भूताः। न केऽपि तादृशाः साहित्यशास्त्रविषयाः सन्ति ये खलु एतत्कृतध्वनिकुक्षौ न समापतन्ति, इत्येतत्कविवैदुष्यं न केषामपि साहित्यमर्मविदुषां प्रेक्षावतां विदुषां तिरोहितम्। एतस्य स्थितिकालः—'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः। प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥' इति राजतरङ्गिणीपद्यानुसारेण ख्रैष्टनवमशताब्द्या उत्तरार्धे ८५५ ईस्वीयतः ८८३ ईस्वीयपर्यन्तं प्रतीयते। यतो हि अवन्तिवर्मा काश्मीरस्य महाराज आसीत्। अथ च तस्य राज्यकालः उक्तेस्वीयपर्यन्तमेवासीदिति ऐतिह्यसिद्धम्। तत्र भवान् आनन्दवर्धनः कविवररत्नाकरसमकालीनः सर्वोपरि प्रसिद्धो लब्धख्यातिरासीदिति जैकोबी निरदीधरत्। तदेव काव्यप्रकाशव्याख्याकर्तुर्वामनाचार्यस्यापि सम्मतम्। मनोरथनामकविसमानकालिकोऽयं कविरिति लोचनग्रन्थात् प्रतीयते। वस्तुतः 'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना। आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥' इति दशमशताब्दीसमुद्भूतराजशेखरीयपद्यानुसारेणानन्दवर्धनस्य नवमशताब्दी एव स्थितिकाल आसीदिति निश्चेतुं शक्यते। अयं च सर्वदर्शनेषु नितरां प्रौढः आलंकारिकशिरोमणिर्वैयाकरणकेसरी चासीत्। व्याकरणे निरतिशयः पक्षपातस्तु 'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्' इति विवृतिग्रन्थात्प्रतीयते। एतद्विरचितग्रन्थास्तु पञ्च सन्ति—(१) ध्वन्यालोकः (२) विषमबाणलीला (३) देवीशतकम् (४) अर्जुनचरितम् (५) विनिश्चयनामबौद्धग्रन्थविवृतिश्चेति शम्।

इति प्रथम उद्द्योतः।



# द्वितीय उद्द्योतः

(२२) प्रश्नः—निम्नलिखितयोः श्लोकयोर्भावार्थं निर्दिश्य सविशेषो ध्वनिभेदो निरूप्यताम्—'एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती' ॥ स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना, वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः। कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे, वैदेहीति कथं भविष्यति हहा हा देवि! धीरा भव ॥'

उत्तरम्—हिमालयेन सार्धं स्वविवाहविषयकवार्तालापं कुर्वति नारदऋषौ पितुः हिमाचलस्य पार्श्वे स्थिता पार्वती विवाहवृत्तान्तश्रवणजन्यलज्जया विनम्रवदना सती स्वहस्तस्थक्रीडाकमलपत्राणि निजहार्दभावगोपनेच्छया अजीगणदिति भावार्थः। अत्राभिधारूपशब्दव्यापारं विनैव नतवदनायाः पार्वत्याः क्रीडाकमलपत्रपरिगणनरूपोऽर्थः लज्जारूपं व्यभिचारिभावं व्यनक्तीति अनुरणनसदृशस्य संलक्ष्यक्रमव्यङ्ग्यस्यार्थशक्त्युद्भवो नाम ध्वनिर्बोध्यः। लीलाकमलपत्रादीनां शब्दानां परिवर्तनेन क्रीडासरोजदलादिशब्दैरपि उक्तार्थव्यञ्जनात् शब्दपरिवृत्तिसहत्वेन अर्थशक्त्युद्भवत्वम्, उक्तवाच्यार्थव्यङ्ग्यार्थयोः क्रमशः प्रतीयमानतया संलक्ष्यक्रमत्वञ्च बोध्यम्। तल्लक्षणञ्च—

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः संप्रकाशते। यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः ॥ इति।

स्निग्धश्यामलेति—प्रावृट्समये वैदेहीविरहसन्तप्तो रामचन्द्रः सीतां लक्ष्यीकृत्य व्याहरति—वर्षाकाले पयोदानां नीलकान्तिभिर्गगनस्य लिप्तप्रायत्वेन रमणीयतया दर्शनेन वकपङ्क्तीनां सविलासोड्डयनस्य विशेषतो दर्शनात्, वातानां वृष्टिसम्पर्केण अतीवशैत्यावहत्वात्, मयूराणां मधुरध्वनिकूजनेन चातिकोन्मादकत्वेऽपि विरहिणो ममात्यन्तकठोरहृदयत्वेन सर्वविधक्लेशसहनसंभवः, किन्तु मत्प्राणप्रिया सीता एतानि दुःखानि कथं सोढुं समर्था भविष्यति? न कथमपि जीविष्यति झटित्येव प्राणांस्त्यक्ष्यतीति सद्यो मरणोन्मुखीं तां संभाव्याश्वासयति रामः—हा देवि! सीते! धीरा भव विरहशोकेन मा विदीर्णा भूरिति भावः। अत्र रामपदं स्ववाच्यदाशरथिरूपार्थसम्बद्धं राज्यपरित्याग–सघनवनगमन–जटावल्कलधारण–जनकमरण–प्रियाहरणादिबन्यदुःखातिशयसहनशीलरूपार्थं व्यनक्तीति वाच्यस्य दाशरथिरूपार्थस्य

तादृशव्यङ्ग्येषु अर्थान्तरेषु संक्रमितत्वेन लक्षणामूलाविवक्षितवाच्यस्यार्थान्तरसंक्रमितवाच्यो नाम ध्वनिरत्र बोध्यः ।

सविशेषो ध्वनिभेद उच्यते—सर्वप्रथमं लक्षणामूलोऽविवक्षितवाच्यो नाम ध्वनिर्द्विविधः—अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च, तदुक्तम्–'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्। अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥' इति। तत्र प्रथमस्योदाहरणम्—'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते। रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' इति। अत्र द्वितीयकमलशब्दस्य सौरभसौन्दर्यादिगुणविशिष्टकमलबोधकतयाऽर्थान्तरे संक्रमितत्वेन सौगन्ध्यातिशयो शोभाद्युत्कर्षश्च व्यज्यते। द्वितीयस्योदाहरणम्—'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः। निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इति अत्रान्धशब्दस्य दृष्टिरहितार्थकतया संयोगवद् विप्रयोगन्यायेन चेतने एवान्धत्वस्य संभवेनाचेतने दर्पणे मुख्यार्थबाधात् अन्धशब्देन मालिन्यविशिष्टे लक्षणया, तदतिशयोऽनुपयोगित्वञ्च व्यञ्जनया प्रत्याय्यते इति अत्यन्ततिरस्कृतवाच्यो नाम ध्वनिरत्र बोध्यः ।

अभिधामूलो विवक्षितान्यपरवाच्यो नाम ध्वनिः प्रथमतो द्विविधः-असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च। तदुक्तम्—'असंलक्ष्यक्रमो द्योतः क्रमेण द्योतितः परः। विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥' इति। प्रथमश्च रसादिः (रस-रसाभास-भाव-भावाभास-भावोदय-भावप्रशम-भावसन्धि-भावशबलताः) तत्र रसस्योदाहरणम्—'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण। अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतियामा रात्रिरेव व्यरंसीत्॥' इति। अत्र कोऽपि विलक्षणः सहृदयानां लोकोत्तरचमत्कारजनकः संभोगशृङ्गाररसास्वादः वाच्यप्रतीत्यव्यवहितोत्तरकालावच्छेदेनैव सम्पद्यतेऽत एवोत्पलशतपत्रव्यतिभेदवत् तदुभयोः प्रतीत्योः क्रमस्य सहृदयैरलक्ष्यमाणतया असंलक्ष्यक्रमव्यङ्ग्यो नाम रसध्वनिरिहावसेयः। द्वितीयस्य संलक्ष्यक्रमव्यङ्ग्यस्योदाहरणम्—'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः। सुमुखि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥' इति। अत्र 'पञ्चाग्नितीव्रतपांसि विना यदा त्वदधरसदृशस्य बिम्बफलस्यापि आस्वादो दुर्लभस्तदा का कथा त्वदधररसस्य अर्थात् त्वदधररसपानं पुण्यातिशयलभ्यमि'ति व्यङ्ग्यं वस्तु वाच्यप्रतीतिसमनन्तरमेव प्रतीयते इति संलक्ष्यक्रमव्यङ्ग्यो नाम वस्तुध्वनिरिह विदेलिमः ।

(२४) प्रश्नः—'रसभावतदाभासभावशान्त्यादिरक्रमः। ध्वनेरात्माऽङ्गिभावेन भासमानो व्यवस्थितः ॥' इयं कारिका सोदाहरणा सुव्यक्तं व्याख्यायताम् ।

उत्तरम्—विभावादिसमूहालम्बनात्मकावरणभङ्गावच्छिन्नरत्याद्यवच्छिन्नचिदानन्दरूपा रसाः शृङ्गारवीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्रशान्तेति नवप्रभेदाः, भावाः रसरूपतासम्पादकविभावादिसम्पर्करहिताः—'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च' इत्युक्ताः स्थायिभावा नव, निर्वेदादयस्त्रयस्त्रिंशद् व्यभिचारिभावाश्च भावपदवाच्याः, तदुक्तम्—'संचारिणः प्रधानानि देवादिविषया रतिः। उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥' इति। तदाभासाः—अनौचित्येन प्रवृत्तेर्दुष्टा रसा रसाभासाः, दुष्टा भावा भावाभासाश्च। तत्प्रशान्तिः—भावस्य शान्तिः प्रशाम्यदवस्था, एवमादिपदेन भावस्योक्तरूपस्योदयः उद्गमावस्था, भावसन्धिः समकक्षयोर्भावयोर्युगपदास्वादः। भावशबलता—निरवच्छिन्नतया तेषां पूर्वपूर्वोपमर्दिनामपरेषामास्वादः। एतादृशो रसादि अक्रमः—असंलक्ष्यक्रमः, अङ्गत्वेन प्रधानतया भासमानः सहृदयहृदयाह्लादकतया चर्वणाविषयीभवन् ध्वनेर्विवक्षितान्यपरवाच्यरूपस्य आत्मा—स्वरूपं व्यवस्थितः निर्णीत इत्यर्थः। तत्र रसध्वनिविषये संभोगशृङ्गाररसध्वनेरुदाहरणम्—'किमपि किमपि मन्दं मन्दमासत्तियोगादि'त्यादि बोध्यम्। भावध्वनिर्यथा—'एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती ॥' इति बोध्यम्। अत्र लज्जारूपो व्यभिचारिभावो लोकोत्तरचमत्कारजनकतया सहृदयैरास्वाद्यते। रसाभासो यथा—'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः। शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥' इति। अत्र शृङ्गारस्य तिर्यग्विषयत्वादनौचित्यप्रवृत्त्या शृङ्गाररसाभासः। तदुक्तम्—'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ॥' इति। भावाभासो यथा—'सर्वेऽपि विस्मृतिपथं विषयाः प्रयाताः विद्याऽपि खेदगलिता विमुखीबभूव। सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥' अत्र गुरुकन्याविषयकत्वेन रतेरनौचित्यप्रवृत्त्या भावाभासः। भावशान्तिर्यथा—'सुतनु! जहिहि कोपं पश्य पादानतं मां, न खलु तव कदाचित् कोप एवंविधोऽभूत्। इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥' अत्र नयनजलमोचनेनेर्ष्याख्यव्यभिचारिभावस्य प्रधानतया सहृदय-

चर्वणाविषयीभूतस्य शान्तिः प्रतीयते। भावोदयो यथा—'चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते। व्रजति रमणे निश्वस्योच्चैः स्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता॥' इति। अत्र व्यभिचारिभावस्य विषादस्योदयः प्रतीयते। भावसन्धिर्यथा—'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः। वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः॥' अत्रावेगहर्षयोः समकक्षयोः व्यभिचारिभावयोः सन्धिश्चमत्कारजनको वर्तते। शबलता यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा, दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्। किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा, चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति॥' इति। अत्र विषादौत्सुक्य-मति-स्मृति-शङ्का-दैन्य-धृति-चिन्तानां व्यभिचारिभावानां पूर्वपूर्वोपमर्देन क्रमश उत्तरोत्तरप्रबलतया पर्यन्ते 'कामिनामधरास्वादः सुरतादतिरिच्यते' इति अधररसपानविषयकसमीहां सूचयन्त्याः शृङ्गारव्यभिचारिभावरूपचिन्ताया एव प्रधानतयाऽऽस्वादो भवति।

(२५) प्रश्नः—रसवदाद्यलङ्काराद् असंलक्ष्यक्रमद्योतनात्मनो ध्वनेः सलक्षणं भेदो निरूप्यताम्।

उत्तरम्—यत्र रसादिः व्यङ्ग्योऽर्थः वाच्येन विभावादिना उत्पलशतपत्रव्यतिभेदवत् सह इव न तु सहैव न वा विलम्बेन प्रधानतया प्रतीतिविषयो भवति तत्रासंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिः। तल्लक्षणमाह—'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्। रसादिपरता यत्र स ध्वनेर्विषयो मतः॥' इति। तथा च यत्र रस–भाव–तदाभास–भावप्रशम–भावोदय–भावसन्धि–भावशबलतास्वरूपं प्रधानीभूतव्यङ्ग्यार्थमुपस्कुर्वन्तः शब्दार्थालंकाराः गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपेण गौणतया व्यवस्थितास्तत्र काव्ये असंलक्ष्यक्रमव्यङ्ग्यरसादिध्वनिरिति व्यपदेशः। एवञ्च शब्दार्थालङ्काराद्युपस्कृतत्वे सति प्रधानतया प्रतीतिविषयीभूतव्यङ्ग्यरसादित्वमेवासंलक्ष्यक्रमव्यङ्ग्यध्वनेर्निष्कृष्टं लक्षणमिति भावः। स च पदवाक्यप्रबन्धपदैकदेशरचनावर्णगतत्वेन षड्विधो विज्ञेयः। किन्तु यस्मिन् काव्ये प्रधानतयाऽन्योऽर्थो वाक्यार्थबोधविषयीभूतः, व्यङ्ग्यरसादयस्तु नातिचमत्कारितयाऽङ्गभूता एव दृश्यन्ते तत्र काव्ये क्रमशो रसादीनां गौणत्वे रसवत्, प्रेयः, ऊर्जस्वि, समाहितम्, भावो-

दयम्, भावसन्धिः, भावशबलत्वम्, अलङ्कारो भवति । तदुक्तं—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥'

अत्र मे मतिरिति कथनेन खण्डनीयपक्षान्तराणामपि सद्भावः प्रतीयते, तथाहि 'रसादीनामङ्गितायामेव रसवदाद्यलङ्काराः, अङ्गतायान्तु उदात्तालङ्कारस्य द्वितीयो भेदः' इत्यादिरीत्या उद्भटादिभी रसादीनां वाक्यार्थबोधे प्राधान्ये एव रसवदाद्यलङ्काराः उक्ताः, किन्तूक्तयुक्त्या सिद्धान्तभूते ध्वन्यालोककर्तुर्मते रसादीनां तत्राप्रधानतायामेव रसवदाद्यलङ्काराणां व्यपदेशो युक्तः । तेषां प्रधानतायान्तु रसादिध्वनिरिति व्यपदेशः इत्येव समीचीनः पक्षः सिद्धो भवति । तेन तादृशपूर्वपक्षो न समीचीन इति भावः । एतेनोक्तकारिकायां 'मे मतिः' इत्युक्तेः कोऽभिप्रायः ? इत्यादयः प्रश्नाः समाहिता भवन्ति ।

(२६) प्रश्नः—'चाटुषु प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते' इति ग्रन्थस्याशयं समुपवर्ण्य 'यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषयः' इत्यादि ग्रन्थाशयः समुपवर्णनीयः ।

उत्तरम्—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥' इति सिद्धान्तानुसारं यस्मिन् काव्ये प्रधानतयाऽन्योऽर्थो वाक्यार्थबोधविषयीभूतः, रसादयस्तु नातिचमत्कारितया तस्याङ्गभूता एव, तत्र काव्ये रसस्याङ्गत्वे 'रसवत्' भावस्याङ्गत्वे 'प्रेयः' रसाभासस्य भावाभासस्य चाङ्गत्वे 'ऊर्जस्वि' भावशान्त्यादीनामङ्गत्वे च क्रमशः 'समाहितम्' 'भावोदयम्' 'भावसन्धि' 'भावशबलत्वम्' अलङ्कारा व्यपदिश्यन्ते । एवञ्च 'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनम्' इत्यादौ राजादिविषयकमिथ्याप्रशंसात्मकचाटुषु वाक्यार्थबोधविषयतया प्रधानीभूतेषु राजविषयकरतिभावस्य तदङ्गत्वेन प्रेयोऽलङ्कारस्य व्यवहारो भवतीति एतादृशस्थले राजादयोऽङ्गभूता एव दृश्यन्ते न तु प्रधानीभूता इति भावः । तत्रादिपदेन भावादयोऽपि गृह्यन्ते इति उद्भटानुसृतः पन्थाः । वस्तुतस्तु प्रागुक्तचाटुषु प्रशंसनीयराजादिविषयकरतिभावस्यैव प्राधान्येन चमत्कारित्वात् नैव प्रेयोऽलङ्कारत्वम्, भावादीनामप्राधान्ये एव तदलङ्कारस्य व्यवहारात्, तेन तत्र करुणरसादीनां प्रधानीभूतराजादिविषयकरतिभावाद्यङ्गतयैव रसवदाद्यलङ्कारत्वमिति हृदयम् ।

'यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषयः' इति ग्रन्थस्यायमाशयः—यदि चिद्रूपाणां रसानां चित्तवृत्तिविशेषरूपाणां भावादीनाञ्चाचेतनेऽसम्भवात्,

तत्प्राधान्येऽचेतनवस्तुवृत्तान्तवर्णने रसवदादयोऽलङ्कारा न सम्भवन्तीति चेतनानामेव वाक्यार्थबोधप्रधानतायां तेषां रसवदादीनां सद्भावोऽङ्गीकरणीयः इत्युच्यते तदा रसवदाद्यलङ्कारैरुपमादीनामपि विषयेषु आक्रान्तेषु तेषामुदाहरणाल्पता सर्वथोदाहरणाभावो वा स्यादित्येषाऽऽपत्तिः, यतो हि जडसम्बन्धिन्यपि व्यापारे प्राधान्येन विवक्षणीये चेतनसम्बन्धिव्यापारोपारोपो यथाकथञ्चिद् अन्ततो विभावादित्वेनापि सम्भवत्येव, ततश्च जडमपि वस्तु चेतनव्यापारोपारोपवशात् चेतनवद् भवतीति तत्रापि रसवदादीनामेव साम्राज्यं स्यात् बलीयसा व्यापकेन च रसवदाद्यलङ्कारेण दुर्बलस्योपमादेर्बाधात् इति स्पष्टमेव निर्विषयत्वमुपमादीनाम् । न चाचेतने चेतनवस्तुवृत्तान्तारोपेऽपि तत्र वस्तुतेऽचेतनत्वानैव प्राधान्येन रसवदलङ्कारस्य न विषयत्वं, चेतनवृत्तान्तारोपेऽपि जडे चैतन्यविरहेण रसादेरभावात्, तथा च स एवोपमादेर्विषय इति वाच्यम् ? तथासति महतः काव्यप्रबन्धस्य प्राधान्येन रसैकाश्रयतया प्रसिद्धस्य नीरसत्वापत्तेः ; अचेतनानामपि नगनगरनदीवनोपवनादीनां चेतनवद्वर्णनस्य प्रायशो महाकवीनां काव्येषु रसैकजीवितेषु च समुपलम्भात् । यथा—'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना, विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् । यथाऽऽविद्धं याति स्खलितमभिसन्धाय बहुशो नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥' इत्यादावचेतनायाः सरितश्चरिति गतिविशेषे मानवतीचरितारोपात् सहृदयैरनुभूयमाना सरसता नापलपितुं पार्यते कैश्चित् इत्याकूतम् ।

(२७) प्रश्नः—**रसस्य क्व ध्वनित्वम् ? क्व चालंकारत्वम् ? इत्युपपाद्य तयोरुदाहरणे केचन साङ्गोपाङ्गे सोपपादनं प्रकाशयन्तु ।**

**उत्तरम्**—'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् । रसादिपरता यत्र स ध्वनेर्विषयो मतः ।'

अर्थात्–यत्र काव्ये रसादयो व्यञ्जनया प्रतीयमानाः प्रधानतया वाक्यार्थीभूताः सन्तः विच्छित्तिविशेषाधायका भवन्ति, वाच्यं वाचकं तच्चारुत्वहेतवोऽलंकारा गुणाश्च अप्रधानीभूतव्यङ्ग्यरसाद्युपस्कारका एव सन्ति तत्र रसस्य ध्वनित्वं भवति । किन्तु—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः' । अर्थात् यत्र काव्ये व्यङ्ग्यरसाद्यपेक्षया वाच्यार्थ एव प्रधानतया विच्छित्तिविशेषाधायकतया वाक्यार्थबोधविषयीभूतो रसादयस्तु नातिचमत्कारितयाऽङ्गभूता एव भवन्ति, तत्र रसवदादिः अलंकारो भवतीति भावः । तत्र श्रृङ्गारे रसध्वने-

रुदाहरणम्—'निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधूर्बोधत्रासनिरुद्धचुम्बनरसाऽप्याभोगलोलं स्थिता । वैलक्ष्याद् विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः, साकाङ्क्षप्रतिपत्ति नाम हृदयं यातं तु पारं रतेः ॥' इति । अत्र नायकनायिकयोः परस्परचुम्बनाभिलाषधाराया निरोधपरम्परायाः पर्यवसानासंभवेन प्रतीयमाना रतिर्द्वयोरपि समानाकारिकां चित्तवृत्तिं सूचयन्ती केनाप्यद्भुतेन प्रकारेण शृङ्गाररसमेव परिपुष्णातीति असंलक्ष्यक्रमव्यङ्ग्यशृङ्गाररसध्वनिसाम्राज्यमेतत् । रसवदादिस्तु अलंकारो द्विविधः-शुद्धः, संकीर्णश्च । तत्र शुद्धस्योदाहरणम्—'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं, केयं निष्करुण ! प्रवासरुचिता केनासि दूरीकृतः । स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो, बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥' इति ।

अत्र वस्त्वन्तरेणानुपस्कृतः स्वप्नदर्शनोद्दीपितः शोकस्थायिभावकः करुणरसः स्तुत्यराजप्रतापातिशयस्य वस्तुनोऽङ्गमिति शुद्धो रसवदलंकारः । द्वितीयस्योदाहरणम्—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं, गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः, कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ।

अत्र शिवप्रभावातिशयस्य प्रधानतया वाक्यार्थबोधविषयतया विच्छित्तिविशेषाधायकत्वादङ्गित्वम्, परेषां वस्तूनां तस्यैवोपस्कारकत्वात्, तस्येर्ष्याविप्रलम्भशृङ्गाररसोऽङ्गम्। स च न शुद्धः, अपि तु श्लेषालंकारप्रसाधित इति संकीर्णस्य तस्य रसस्याङ्गत्वमिति । इदमत्र तत्त्वं रसादीनां प्राधान्ये ध्वनिः उपमादीनां तदुपकारकत्वेऽलङ्कारत्वम् , रसादेरन्यस्य व्यङ्ग्यस्य प्राधान्ये रसादेः पुनरङ्गत्वे रसवदादयोऽलङ्कारा इति विषयविभागो बोध्यः ।

(२८) प्रश्नः—'क्षिप्तो हस्तावलग्नः' इति पद्ये रसयोरविरोधित्वं अन्योक्तदिशा निरूप्यताम् ।

उत्तरम्—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं, गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण । आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः, कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥' इति पद्ये शिवप्रभावातिशयात्मकवस्तुनः कविनिष्ठशिवविषयकरतिभावस्यैव वा प्रधानतया वाक्यार्थबोधविषयत्वेनाङ्गित्वं, तस्य करुणरसोऽङ्गम् , तस्य चेर्ष्याख्यविप्रलम्भशृङ्गार-

रसोऽङ्गमिति सङ्कीर्णस्यैव उत्कर्षस्य भगवत्पराक्रमातिशयम्प्रति अङ्गत्वेन सङ्कीर्णरसवदलङ्कारस्य न्याय्यो विषयः प्रतीयते । अत एवात्र तादृशश्रृङ्गारस्याप्रधानत्वादेव परस्परं विरुद्धयोरपि करुणश्रृङ्गारयोः प्रधानीभूतस्योक्तवस्तुनो रतिभावस्य वाऽङ्गत्वेन व्यवस्थानात् उभयोरत्र सन्निवेशो न दोषः, यतो हि तृतीयोद्द्योते दर्शयिष्यमाणया पद्धत्या विरुद्धयोरपि रसयोः समावेशः पराङ्गत्वेन न दोषमावहति । अन्यथा यद्युभयो रसयोः प्रकृतोक्तविषयाङ्गत्वं न स्यात्तदा पयःपावकयोरिव परस्परविरुद्धयोः करुणश्रृङ्गारयोरेकत्र समावेशो न स्यात् । तदुक्तम्—'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् । बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥' इति । लोकेऽपि मिथो विरुद्धयोरपि भृत्ययोरेकस्य प्रधानीभूतस्य राज्ञोऽनुचरीभावदर्शनात् । दुर्वैरिणोरप्यनुचरीभावे स्वामिन उत्कर्ष एव भवति नापकर्ष इति भावः ।

(२९) प्रश्नः—रसादेरलङ्कारत्वे शुद्धिसङ्करयोः काऽवस्थितिः ? इति सप्रघट्टं निरूप्यताम् ।

उत्तरम्—यद्यपि प्रश्नस्यास्योत्तरं प्रकारान्तरेण प्राक् प्रदत्तमेव तथापि प्रश्नवैचित्र्यमनुसन्धाय पुनरुत्तरं लिख्यते—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥' इति कारिकानुसारं यस्मिन् काव्ये विवक्षितव्यङ्ग्यरसादिभिन्ने वस्त्वलङ्कारलक्षणे वाच्ये वा प्रधानतया वाक्यार्थबोधविषयीभूते सति रसादयो विच्छित्तिविशेषाधायकतयाऽङ्गभूता एव भवन्ति, तस्मिन् काव्ये रसवदाद्यलङ्कार इति तात्पर्यम् । यद्यपि उद्भटादिभिः रसादीनां वाक्यार्थबोधे प्रधानतया विद्यमानत्वे एव रसवदाद्यलङ्काराः प्रतिपादिताः, किन्तूक्तयुक्त्या सिद्धान्तभूते पक्षे रसादीनां तत्राप्रधानतायामेव तेऽलङ्कारा व्यपदिश्यन्ते इत्येव सारम् । स च रसवदादिरलङ्कारो द्विविधः-शुद्धः, सङ्कीर्णश्च, तत्र शुद्धस्योदाहरणं 'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं केयं निष्करुण ! प्रवासरुचिता केनासि दूरीकृतः । स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥' इत्यत्र स्तुत्यराजप्रभावातिशयात्मकवस्तुन एव चाटुरूपस्य वा मिथ्याप्रशंसावचनस्य प्रधानतया विच्छित्तिविशेषाधायकतया तत्प्रत्येव वस्त्वन्तरेणानुपस्कृतस्य स्वप्नदर्शनोद्दीपितस्य शोकस्थायिभावकस्य शुद्धस्य करुणरसस्याङ्गत्वमिति स्पष्टमेव शुद्धं रसवदलङ्कारत्वम् । संकीर्णस्योदाहरणं—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं, गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः

सम्भ्रमेण । आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः, कामीवार्द्रापराधः, स दहतु दुरितं शाम्भवो वः शराग्निः ॥' इत्यत्र शिवप्रतापातिशयस्यैव लोकोत्तराह्लादजनकतया प्राधान्येन वाक्यार्थबोधविषयतयाऽङ्गित्वम्, श्लेषोपस्कृतस्येर्ष्याख्यविप्रलम्भशृङ्गारस्य तु तत्प्रत्यङ्गत्वमेवेति एतादृशोऽप्रधानीभूतरसको रसवदलङ्कारस्य विषयः समुचितः प्रतीयते । अर्थात् प्रकृते शिवमहिमोत्कर्षस्य शिवविषयकभक्त्यात्मकरतिभावस्य वा प्राधान्यं प्रतीयते परेषां पदार्थानां तस्यैवोपस्कारकत्वात्, तस्येर्ष्याविप्रलम्भोऽङ्गम्, स च न शुद्धः, अपि तु श्लेषालङ्कारप्रसाधित इति स्पष्टमेव सङ्कीर्णस्य रसवदलङ्कारस्य विषयत्वमिति भावः ।

(२०) प्रश्नः—तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः,
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवाश्रिता मधुलिहां शब्दैर्विना लक्ष्यते,
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥'

पद्यमिदं ससन्दर्भं व्याख्याय गुणानां शब्दार्थधर्मत्वं निराकृत्य सप्रमाणं रसैकधर्मत्वं प्रतिपादयत ।

उत्तरम्—कश्चिज्जनः सुहृदम्प्रति लतायां कलहान्तरितनिजप्रेयसीवृत्तान्तसमारोपेण व्याहरति—तन्वी कृशा कोमला च, मेघजलार्द्रपल्लवतया वर्षाजलक्लिन्नकिसलयतया, अश्रुभिः नयनसलिलैः धौताधरेव प्रक्षालितरदनच्छदेव स्वकालविरहात् कुसुमोद्गमसमयव्यतिगमाद् विश्रान्तपुष्पोद्गमा विरतप्रसूनोत्पत्तिः, आभरणैः अलंकरणैः शून्या रहितेव, मधुलिहां भ्रमराणां शब्दैः गुञ्जनैर्विना चिन्तामौनमाश्रितेव मत्समागमोपायानुसन्धानेन तूष्णीम्भावमवलम्बितेव सा कापि विलक्षणा, चण्डी कोपनशीला, पादयोः पतितं चरणयोरवनतं मामवधूय तिरस्कृत्य जातानुतापोत्पन्नपश्चात्तापा इव पुरोऽग्रे लक्ष्यते प्रतिभातीत्यर्थः ।

- अत्र लताचरिते कलहान्तरितायाश्चरित्रचित्रणेन सहृदयै रसवत्ताऽनुभूयते । इदमत्र तत्त्वं चिदानन्दरूपाणां रसानां चित्तवृत्तिविशेषरूपाणां भावादीनाञ्च जडेऽसंभवात् तत्प्राधान्येऽचेतनवस्तुवृत्तान्तवर्णने रसवदादयोऽलंकारा न संभवन्तीति चेतनानामेव वाक्यार्थबोधप्रधानतायां रसवदादीनां सद्भावोऽङ्गीकरणीयः एवञ्च रसादीनां प्राधान्ये एव रसवदाद्यलंकाराः संभवन्तीति उद्भटानुयायिनो मन्यन्ते, तन्न युक्तम्, तथा सति महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमापद्येत, नगनगरनदी-

वनलताद्यचेतनानां वर्णनस्य प्रायेण महाकवीनां काव्येषु रसैकजीवितेषु समुपलभ्यमानतया तत्र रससारस्य लोकोत्तरचमत्कारस्य सहृदयैरनुभूयमानस्यापलपितुमशक्यतया नीरसत्वेन काव्यत्वाभावापादनासंभवात्, यथा उपर्युक्तपद्येऽपि लताचरिते कहलान्तरितावृत्तान्तसमारोपेणानुभूयमानसरसताया नापलापः संभवति नहि रसास्वादे वर्णनीयस्य वस्तुनश्चैतन्याचैतन्ये अपेक्ष्येते अपितु आस्वादयितुः सहृदयतैवेति भावः । एवञ्च रसादीनामप्राधान्ये एव रसवदाद्यलंकारा भवन्तीति हृदयम् ।

'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः । अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत्' इति कारिकानुसारं यथा शौर्यसौजन्यविद्यादिनयादयो गुणाः प्रधानात्मनि विद्यमानास्तमेवात्मानं अनुगच्छन्ति तथैव माधुर्यौजःप्रसादाख्या गुणा रसस्थाः सन्तः काव्यात्मभूतं रसादिमेव । यथा च कटककुण्डलादयः शरीरस्था अलंकाराः शरीरद्वाराऽऽत्मानमलंकुर्वन्ति तथैव शब्दार्थनिष्ठा अनुप्रासोपमादयः शब्दार्थद्वारा रसादिम् । तदुक्तं-'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥' इति । एवञ्च रसोत्कर्षप्रयोजकत्वे सति रसमात्रवृत्तित्वमित्येव गुणस्य निष्कृष्टं लक्षणम् 'स्वाश्रयाभिव्यञ्जकत्वरूपपरम्परासम्बन्धेन तु शब्दार्थयोरपि गुणो वर्तत' इति ।

(२१) प्रश्नः—'गअणं च मत्तमेहं धारालुलिअज्जुणाइं अ वणाइं ।
निरहङ्कारमिअङ्का हरन्ति नीलाओ वि णिसाओ ॥'

इति पद्ये ध्वनेर्वैशिष्ट्यं विवक्षितविषयञ्च प्रतिपाद्य, ओजःप्रसादयोर्लक्षणे लक्ष्ययोः संगमय्य प्रदर्शनीये ।

उत्तरम्—'गगनञ्च मत्तमेघं धारालुलितार्जुनानि च वनानि । निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः ॥' इत्यस्यायमभिप्रायः—मत्ताः क्षीबा मेघा यत्र तादृशं चापि गगनं नभः, एवं धाराभिः निरवच्छिन्नजलसंपातैः लुलिताः कम्पिता अर्जुनाः तरवः वृक्षविशेषा वा यत्र तादृशानि च वनानि, तथा निरहङ्कारमृगाङ्काः—कान्तिराहित्येनापास्तदर्पो मृगाङ्कश्चन्द्रो यासु तादृश्यः, नीला अन्धकारावृता अपि निशा रजन्यः मनो हरन्तीति भावः । अत्र मत्तत्वाहंकारयोश्चेतनधर्मतयाऽचेतनमेघचन्द्रयोर्बाधात् क्रमशः सर्वतो भ्रमणं मलिनत्वञ्च लक्षणया प्रतिपादयन्तौ मत्तनिरहङ्कारशब्दौ तदतिशयं व्यङ्क्तः । न च निरहङ्कारपदवाच्यस्याहङ्काररहित्यस्य चन्द्रेऽबाधात् कथमत्र लक्षणेति वाच्यम् ? अहङ्कारस्य चन्द्रे कदाचिदप्यनुपलम्भात् तदभावस्यापि संयोग-

विऽयोगन्यायेन अहङ्कारवत्त्वेन संभाविते चेतने एव वक्तुं शक्यतया घटपटादावचेतने ज्ञानाभावस्यैवोपलब्धुमशक्यत्वात् ।

ओजो हि ज्वलितत्वस्येव चित्तस्य विस्तारात्मवृत्तिविशेषदीप्तिजनको गुणविशेषः, तदुक्तं—'रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः । तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्' इति । अर्थात् चित्तस्य समुज्ज्वलताख्यदीप्तिजनकौजसा शब्दार्थव्यङ्ग्याः रौद्रवीराद्भुता रसाः प्रतीयन्ते तादृशरौद्रादिव्यञ्जकशब्दार्थौ व्यङ्ग्यव्यञ्जकभावेनाश्रित्यौजो व्यवस्थितमिति भावः । तादृशमोजोगुणं समासदैर्घ्यमर्थौद्धत्यञ्च व्यनक्ति । तत्र दीर्घसमासव्यङ्ग्यमोजो यथा 'चञ्चद्भुजभ्रमितचण्डगदाऽभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य । स्त्यानावनद्धघनशोणितशोणपाणि—रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥' इति । अर्थौद्धत्यव्यङ्ग्यमोजो यथा—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः, क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥' इति ।

प्रसादो हि शब्दार्थयोः स्फुटताख्यस्वच्छत्वं नाम गुणविशेषः । तत्र शब्दनिष्ठं स्वच्छत्वं झटिति अर्थोपस्थापकत्वरूपम्, अर्थनिष्ठं स्वच्छत्वञ्च झटित्युपस्थितिविषयत्वरूपं बोध्यम् । ताभ्यां श्रोतुश्चित्तस्य सुतरां प्रसादनात् प्रसाद इत्यन्वर्थं नाम बोध्यम् तदुक्तं 'समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति । स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः, इति । तदुदाहरणं यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः । पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥' इति ।

(३२) प्रश्नः—ध्वन्यात्मभूते शृङ्गारे केषामलंकाराणां समावेशः संभवति केषां नेति निर्णीयताम् ।

उत्तरम्—'ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः । रूपकादिरलंकारवर्ग एति यथार्थताम्' ॥ इति कारिकानुसारं ध्वन्यात्मके शृङ्गारे रसोपयोगित्वसमीक्षां विधाय प्रतिभानवता कविना निबद्धो रूपकादिरर्थालंकारवर्गः, यथार्थतां रसोपयोगितया चारुताहेतुत्वरूपं वस्तुतोऽलंकारत्वं प्राप्नोति । अयंभावः—अलंकारो हि लौकिककटकाद्यलंकारसाम्यात् अङ्गिनो रसादेश्चारुत्वहेतुरुच्यते, अर्थालंकारवर्गश्च रूपकादियांवान् वर्तते सर्वोऽपि यदि समीक्ष्य कविभिर्विनिवेश्यते तदाऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः शृङ्गारादे रसस्य शोभां जनयति । अर्थात् यथा कटककुण्डलादिर्लौकिका-

लंकारो यथा योग्यस्थाने समीक्ष्य विनिवेशित एव शरीरस्य शोभामुत्पादयन् वास्तविकालंकारत्वं भजति, तथैव रूपकादिरर्थालंकारः कविभिः सम्यक् पर्यालोच्य सन्निवेशित एव शृङ्गारादिरसस्योपकारको भवति। परन्तु यमकादेः शब्दालंकारस्य ध्वन्यात्मभूते शृङ्गारेऽङ्गता न सहृदयैरङ्गीकृता। तेषां हि यमकादीनां पृथक्प्रयत्ननिर्वर्त्यतया तन्निष्पादने कवीनामन्यव्यासङ्गसंभवेनात्यन्तसुकुमारस्य विप्रलम्भशृङ्गारादेर्विच्छेदसंभवात्। तदुक्तं—'ध्वन्यात्मभूते शृङ्गारे यमकादीनिबन्धनम्। शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः' इति। एवमनुप्रासोऽपि सर्वेष्वेव शृङ्गारप्रभेदेषु कविभिर्न निबद्धव्यः। तदुक्तम्—'शृङ्गारस्याङ्गिनः यत्नादेकरूपानुबन्धवान्। सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥' इति। तथैव दुष्कर-शब्दभङ्गश्लेषचित्रभाषासमप्रयत्नतोऽपि न निबद्धव्याः। तथा हि—'रसवन्ति हि वस्तूनि सालंकाराणि कानिचित्। एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः। यमकादिनिबन्धे तु पृथग् यत्नोऽस्य जायते। शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते। रसाभासाङ्गभावस्तु यमकादेर्न वार्यते। ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते ॥' इति। तथा चायं निर्गलितोऽर्थः—शृङ्गारादिरसादिध्वनौ स एवालंकार उपकारकः स्मृतः यो नान्तरीयकतया रसबन्धानुकूलप्रयासेनैव निष्पाद्यो भवेत्। अथ च यस्य सन्निवेशो रसैकतानतया कर्तुं शक्यो भवेत्। तदुक्तम्—

'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग् यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥' इति।

(२३) प्रश्नः—'विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन। काले च ग्रहणत्यागौ' इत्येतावदंशं सोदाहरणं व्याख्याय निम्नपद्ये सन्दर्भे विवक्षितविषयः प्रतिपादनीयः।

'आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो-
स्तत् किं मामनिशं सखे ! जलधर ! त्वं दग्धुमेवोद्यतः ॥'

उत्तरम्—'विवक्षा तत्परत्वेनेति। अयमाशयः—यथा कटककुण्डलादिर्लौकिकालंकारः यथास्थानं समीक्ष्य सन्निवेशित एव शरीरं भूषयन् वास्तविकालंकारत्वं भजते तथैव रूपकादयोऽपि यथास्थानं सम्यग् निभाल्य सन्निवेशिता एव रसादिमुत्कर्ष-

यन्तस्तत्त्वतोऽलंकारत्वभाजो भवन्ति, अत एव मूलकृताऽलंकारसन्निवेशप्रकारः प्रदर्शितः—'विवक्षा तत्परत्वेनेत्यादि ।' एवञ्च 'यमलंकारं तदङ्गतया विवक्षति नाङ्गित्वेन, यमवसरे गृह्णाति, यमवसरे त्यजति, यं नात्यन्तं निर्वोढुमिच्छति, यं यत्नादङ्गत्वेन प्रत्यवेक्षते, स एवमुपनिबध्यमानोऽलंकारो रसाभिव्यक्तिहेतुर्भवतीति फलितम् । तत्र प्रथमांशो व्याख्यायते—रसबन्धेष्वत्यादृतमना रसैकतानतया कविः यमलंकारं रसाद्युपकारकत्वेनाप्रधानतयैव विवक्षाविषयीकरोति न तु प्रधानतया तदुदाहरणमाह—'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं, रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं, वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥' इति अत्र 'केयं बाला ? मत्परिणययोग्या न वा ? परिणययोग्यत्वेऽपि मय्यनुरक्ता न वा, अपरिचिताश्च मादृशानां साहसं नोचितम्' इत्यादि विचारयतैव मया स्वमनोरथो व्यर्थीकृतः, त्वया पुनः साहसमाकलय्य मदुचितमुपभोगं-'कामिनामधरास्वादः सुरतादतिरिच्यते' इति रतिसर्वस्वरूपाधरास्वादं विदधता धन्यत्वं लब्धमिति मदपेक्षया त्वमेवोत्कृष्ट इति व्यतिरेकालंकारः शृङ्गाररसव्यासक्तेन कविना तत्पोषकतयाऽनायासेनैव सन्निवेशितः सन् शृङ्गारं पुष्णन् स्फुटमेव तदङ्गतया प्रतिभासते । मूलकृता तु भ्रमरस्वभावोक्तिरलंकार एव प्रकृतशृङ्गाररसानुगुणतया प्रतिपादितः । अवसरे ग्रहणस्योदाहरणम्—'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः । अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं, पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥' इति । अत्र श्लेषानुप्राणितोपमाया भविष्यदीर्ष्याविप्रलम्भशृङ्गारस्य पोषकतयाऽवसरे ग्रहणमिति भावः । उपात्तस्यालंकारस्य प्रकृतरसानुकूलान्यालंकारापेक्षया रसानुपयोगित्वेन परित्यागो यथा—'रक्तस्त्वं नवपल्लवैरहमपि' इति । अत्र तृतीयपादपर्यन्तं निर्व्यूढस्यापि श्लेषस्य चतुर्थपादे विप्रलम्भशृङ्गारपोषकस्य व्यतिरेकस्यानुरोधेन परित्यागः कृतः । अत्र श्लेषोपमायाः व्यतिरेकेण सह संकरस्तु नापादनीयः, 'आक्रन्दाः स्तनितैः'—इत्यादौ श्लेषमन्तरापि मेघविरहिणोः केवलं साम्यप्रतिपादनेनैव मेघे दाहोद्यमस्य वर्णनात् आधिक्यप्रतीतेर्व्यतिरेकः स्फुरतीति तदैव श्लेषोपमाया व्यतिरेकाङ्गत्वमनायत्या कल्पयितुं शक्येत, यदि तां विना व्यतिरेकः स्वरूपं प्रकाशयितुं न समर्थो भवेत्, तन्नास्ति यतो हि 'आक्रन्दाः स्तनितैः'—इत्यादिपद्येषु श्लेषरहितेनापि साम्येन व्यतिरेकः प्रतिभासते, तस्मान्नात्र श्लेषोपमाव्यतिरेकयोरङ्गाङ्गिभावसंकरः संभवतीति भावः ।

यन्तस्तत्त्वतोऽलंकारत्वभाजो भवन्ति, अत एव मूलकृताऽलंकारसन्निवेशप्रकारः प्रदर्शितः—'विवक्षा तत्परत्वेनेत्यादि ।' एवञ्च 'यमलंकारं तदङ्गतया विवक्षति नाङ्गित्वेन, यमवसरे गृह्णाति, यमवसरे त्यजति, यं नात्यन्तं निर्वोढुमिच्छति, यं यत्नादङ्गत्वेन प्रत्यवेक्षते, स एवमुपनिबध्यमानोऽलंकारो रसाभिव्यक्तिहेतुर्भवतीति फलितम् । तत्र प्रथमांशो व्याख्यायते—रसबन्धेष्वत्यादृतमना रसैकतानतया कविः यमलंकारं रसाद्युपकारकत्वेनाप्रधानतयैव विवक्षाविषयीकरोति न तु प्रधानतया तदुदाहरणमाह—'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं, रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं, वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥' इति अत्र 'केयं बाला ? मत्परिणययोग्या न वा ? परिणययोग्यत्वेऽपि मय्यनुरक्ता न वा, अपरिचितायाञ्च मादृशानां साहसं नोचितम्' इत्यादि विचारयतैव मया स्वमनोरथो व्यर्थीकृतः, त्वया पुनः साहसमाकलय्य मदुचितमुपभोगं-'कामिनामधरास्वादः सुरतादतिरिच्यते' इति रतिसर्वस्वहरणमधरास्वादं विदधता धन्यत्वं लब्धमिति मदपेक्षया त्वमेवोत्कृष्ट इति व्यतिरेकालंकारः शृङ्गाररसव्यासक्तेन कविना तत्पोषकतयाऽनायासेनैव सन्निवेशितः सन् शृङ्गारं पुष्णन् स्फुटमेव तदङ्गतया प्रतिभासते । मूलकृता तु भ्रमरस्वभावोक्तिरलंकार एव प्रकृतशृङ्गाररसानुगुणतया प्रतिपादितः । अवसरे ग्रहणस्योदाहरणम्—'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा–दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः । अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं, पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥' इति । अत्र श्लेषानुप्राणितोपमाया भविष्यदीर्ष्याविप्रलम्भशृङ्गारस्य पोषकतयाऽवसरे ग्रहणमिति भावः । उपात्तस्यालंकारस्य प्रकृतरसानुकूलान्यालंकारापेक्षया रसानुपयोगित्वेन परित्यागो यथा—'रक्तस्त्वं नवपल्लवैरहमपि' इति । अत्र तृतीयपादपर्यन्तं निर्व्यूढस्यापि श्लेषस्य चतुर्थपादे विप्रलम्भशृङ्गारपोषकस्य व्यतिरेकस्यानुरोधेन परित्यागः कृतः । अत्र श्लेषोपमायाः व्यतिरेकेण सह संकरस्तु नापादनीयः, 'आक्रन्दाः स्तनितैः'—इत्यादौ श्लेषमन्तरापि मेघविरहिणोः केवलं साम्यप्रतिपादनेनैव मेघे दाहोद्यमस्य वर्णनात् आधिक्यप्रतीतेर्व्यतिरेकः स्फुरतीति तदैव श्लेषोपमाया व्यतिरेकाङ्गत्वमनायत्या कल्पयितुं शक्येत, यदि तां विना व्यतिरेकः स्वरूपं प्रकाशयितुं न समर्थो भवेत्, तन्नास्ति यतो हि 'आक्रन्दाः स्तनितैः'—इत्यादिपद्येषु श्लेषरहितेनापि साम्येन व्यतिरेकः प्रतिभासते, तस्माच्चात्र श्लेषोपमाव्यतिरेकयोरङ्गाङ्गिभावसंकरः संभवतीति भावः ।

(३४) प्रश्नः—'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै—स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे ! मामपि । कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः, सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥' अत्रोदाहरणे विवक्षितो विषयः प्रकाश्यताम् ।

उत्तरम्—विवक्षितरसानुगुण्यादन्यालंकारापेक्षयोचितावसरे उपात्तमप्यलंकारं कविः पश्चात्त्यजति । अर्थात् यदाऽन्यमलंकारं कविर्नितरां प्रकृतरसोपयोगिनं पश्यति तदोपात्तमप्यलंकारं त्यजति रसोपयोगातिशयानाधानात् इति हृदयम् । यथा—रक्तस्त्वं नवपल्लवैः—इति श्लोके आदितश्चरणत्रये निर्व्यूढोऽपि श्लेषश्चतुर्थचरणे प्रकृतरसानुगुणतरस्य व्यतिरेकस्यानुरोधेन त्यज्यमानो विप्रलम्भशृङ्गाराख्यं रसविशेषं पुष्णाति । अत्र रक्तशिलीमुखशब्दयोः शब्दश्लेषः । शब्दस्य परिवृत्त्यसहत्वात्, कान्तापादतलाहतिरित्यत्र तु तदभावादर्थश्लेषः । रक्तत्वादीनां साधर्म्ये प्रतिपादितेऽपि सशोकत्वेनोपमेयभूतस्यात्मनो न्यूनत्वस्य प्रतिपादनात् व्यतिरेकः । न चोपमानापेक्षयोपमेयस्याधिक्ये एव व्यतिरेकस्यालंकारिकैर्व्यवहृतत्वात् कथमत्र व्यतिरेक इति वाच्यम् ? 'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथः सितीकृतः' इत्यादिशिष्टोदाहरणस्य 'न्यूनताऽथवा' इति व्यतिरेकलक्षणस्य च सद्भावेन उपमेयस्य न्यूनत्वोक्तावपि व्यतिरेकस्यालंकारिकैः स्वीकृतत्वात् । न च नरसिंहशरीरवत् प्रकृते श्लेषव्यतिरेकयोरङ्गाङ्गिभावात्मकः संकर एव न तु स्वतन्त्रयोस्तयोरेकत्र समावेश इति वाच्यम् ? यत्र श्लेषविषयकशब्दे एवोपकार्यत्वेन व्यतिरेकस्य प्रतीतिर्जायते तत्रैव श्लेषव्यतिरेकसंकरस्य स्वीकारात् । प्रकृते तु रक्तादिशब्देषु श्लेषस्य अशोकसशोकादिशब्देषु च व्यतिरेकस्य विषयतायाः सत्त्वेनोभयोर्वैयधिकरण्येन संकरस्य वक्तुमशक्यत्वात् ।

(३५) प्रश्नः—'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्' इत्यंशं सोदाहरणं निरूप्य रूपकोपमाध्वनी लक्ष्येषु संगमय्य सम्यक् प्रदर्शनीयौ ।

उत्तरम्—रसपोषकत्वात् यं परिसमापयितुमिष्टमप्यलंकारं कविरङ्गतया महता यत्नेन निर्वाहयति तस्योदाहरणमाह—'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं, वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् । उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्, हन्तैकस्थं क्वचिदपि न ते भीरु ! सादृश्यमस्ति ॥' इति पद्ये कविकोकिलकालिदासेन विरहिणो यक्षस्य जायाम्प्रति मेघद्वारा प्रेषितः सन्देशो वर्णितः ।

अस्य तात्पर्यन्तु कथंचिद् पृथक् पृथक् तवाङ्गसादृश्यावलोकनेन प्राणान् दधानोऽपि क्वचिदेकत्र सर्वसादृश्यमालोकयितुमुत्कण्ठितोऽहं तदनुपलभ्य न निर्वृणोमीति भावः। 'भीरु' इति सम्बोधनेन या हि कातरहृदयो भवति नासौ सर्वस्वमेकस्थं धारयतीत्यभिप्रायः प्रतीयते। अनेनास्या अनुपमसौन्दर्यं व्यज्यते इति भावः। तथा चास्मिन् श्लोके उत्प्रेक्षालंकारस्य निर्वाहकं सादृश्यं कविना यथा प्रारब्धं तथैव परिसमापितमपि विप्रलम्भशृङ्गारस्य पोषकतयैव वर्तते इति निर्व्यूढस्यापि साम्यस्य यस्माद् रसोपकारकतया समीक्षणादङ्गत्वमित्याकूतम्।

रूपकध्वनेः—'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्, स्मेरेऽधुना तव मुखे तरलायताक्षि ! । क्षोभं यदेति न मनागपि तेन मन्ये, सुव्यक्तमेव जल (ड) राशिरयं पयोधिः ॥' इत्युदाहरणे श्लेषानुप्राणितोत्प्रेक्षालंकारो वाच्यतया बोधविषयो भवति। ततश्चातन्द्रचन्द्रदर्शनेन पयोधेः क्षोभस्य प्रसिद्धत्वेऽपि यदयमीषद्धास्यशालित्वन्मुखदर्शनेन न क्षुभितः, तस्मादेनं जडतमं मन्ये, इत्येतावता 'त्वन्मुखं चन्द्र' इति रूपकालंकारो व्यज्यते इति हृदयम्।

उपमाध्वनेः—'वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥'

इत्युदाहरणे उपमानभूतप्रियास्तनतटापेक्षया उपमेयभूतरिपुगजकुम्भस्थलस्यैव वीरजनोचितात्यन्तश्लाघनीयत्वप्रदर्शनेन व्यतिरेकालंकारो वाच्यतया प्रतीयते, तेन च व्यतिरेकेण प्रियास्तनतट-रिपुगजकुम्भस्थलयोरुपमा व्यज्यते इत्युपमाध्वनिरत्रावसेयः।

(३६) प्रश्नः—'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥' इमां कारिकामाक्षिप्तपदोपादानप्रयोजनप्रदर्शनपुरःसरं व्याख्याय 'चन्दनासक्तभुजगनिःश्वासानिलमूर्छितः। मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥' इदं पद्यं कस्योदाहरणतयोपन्यस्तं ग्रन्थकारेणेति निर्दिश्यताम्।

उत्तरम्—यस्मिन् काव्ये शब्देन अनुक्तः शब्दानभिहितः अत एवाक्षिप्तो व्यक्तः अलंकार एव न तु वस्त्वपि शब्दशक्त्या अभिधामूलव्यञ्जनया प्रकाशते स शब्दशक्त्युद्भवो ध्वनिः इति भावः। अत्रैवकारेण यत्र वस्तुरूपयोरुभयोरप्यर्थयोर्मध्ये अन्तरेणालङ्कारस्य वा यद्यभिधयैव बोधस्तदा श्लेषालङ्कार एव न तु ध्वनिः। एवञ्च यत्रैकस्यार्थस्याभिधयाऽपरस्यालङ्कारात्मकस्यार्थस्य अभिधामूलव्यञ्जनया

प्रतीतिर्भवति तत्र शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यध्वनिः। यत्र तूभयोरप्यर्थयोर्वस्तुरूपयोः मतान्तरेणालङ्कारयोर्वा अभिधयैव बोधो भवति तत्र श्लेषालङ्कार इति प्रघट्टकार्थः। तत्र श्लेषस्योदाहरणम्—'येन ध्वस्तमनोभवेन बलिजित् कायः पुरा स्त्रीकृतो, यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत्। यस्याहुश्शशिमच्छिरोहर इति स्तुत्यं च नामामराः, पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः॥' इत्यत्राभिधाया नियन्त्रणाभावात् लक्ष्मीपति-गौरीपतिरूपार्थद्वयस्याभिधयैव बोध्यमानत्वात् उभयोरपि वाच्यतया श्लेष एव न तु ध्वनिः, अत एवोक्तकारिकायामाक्षिप्तपदोपादानं कृतम्। तदर्थश्च व्यञ्जनया प्रत्यायित इति बोध्यः। तथा चालङ्कारान्तरस्यापि वाच्यत्वे श्लेषः, व्यङ्ग्यतायान्तु ध्वनिरित्याकूतम्। शब्दशक्तिमूलध्वनेरुदाहरणम्—'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः' इति बोध्यम्। अत्र शिवग्रीष्मयोरौपम्यमभिधामूलव्यञ्जनयैव व्यज्यते इति।

'चन्दनासक्तभुजग—'इति पद्ये उत्प्रेक्षाऽलङ्कारो व्यज्यते, तथाहि-वसन्ते मलयाचलपवनस्य पथिकजनमूर्च्छकत्वं मदनकदनविधायित्वेनैव संभवदत्र चन्दनसक्तसर्पगनिःश्वासानिलवर्धितत्वेन संभावितम्, उत्प्रेक्षावाचक इवादिशब्दश्च नोपात्त इति सम्पूर्णवाक्यार्थव्यङ्ग्योत्प्रेक्षालङ्कारध्वनिः। गरलसंसर्गं विना मलयपवनस्य मूर्च्छाजनकत्वं न संभवतीति स तादृशसंसर्गवत्त्वेनोत्प्रेक्षितः। एवञ्च 'भवेत् संभावनोत्प्रेक्षा प्रकृतस्य परात्मना' इति वचनात् उपमेयस्य मलयपवनस्य मूर्च्छाजनकत्वहेतोश्चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वरूपोपमानात्मना संभावनेति हेतूत्प्रेक्षा व्यज्यते इति हृदयम्।

न च 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः शब्दा इवशब्दोऽपि तादृशः।' इत्युत्प्रेक्षावाचकेवादिशब्दप्रयोगमन्तरा कथमत्रोत्प्रेक्षेति वाच्यम्। उत्प्रेक्षायामुपमेयस्योपमानात्मनाऽध्यवसायस्यैव प्रधानकारणतया इवादिप्रयोगविरहेऽपि क्षत्यभावात्। यथा—'त्रासाकुलः परिपतन् परितो निकेतान्, पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि। तस्थौ तथापि न मृगः क्वचिदङ्गनाना, माकर्णपूर्णनयनेषु हतेक्षणश्रीः' इत्यादावुत्प्रेक्षावाचकेवादिप्रयोगाभावेऽपि मृगेऽविद्यमानस्य वनिताकटाक्षबाणहतनयनशोभत्वस्य स्थित्यभावहेतुतया संभावनेनोत्प्रेक्षायाः सहृदयैरनुभूयमानत्वादिति भावः।

(२७) प्रश्नः—शब्दशक्त्युद्भवध्वनेः श्लेषाद्भेदं सोदाहरणं स्फुटीकृत्य आद्येपार्थान्तरन्यासध्वनी उदाहरणयोः संयोज्य निरूपणीयौ।

उत्तरम्—ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदा श्लेषस्य विषय एवापहृतः स्यादित्याशङ्कायामाह—'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥' अर्थात् यस्मिन् काव्ये शब्देनानुपात्तः, अत एव आक्षिप्तो व्यक्तः, अलङ्कार एव न तु काव्ये वस्त्वपि, अभिधामूलव्यञ्जनया प्रकाशते स शक्त्युद्भवो ध्वनिः । एतावता आलोकमते शब्दशक्त्युद्भवोऽलङ्कारध्वनिरेव न तु वस्तुध्वनिरपि । परैस्तु शब्दशक्त्युद्भवो वस्तुध्वनिरपि स्वीक्रियत एव । परन्तु यदि वस्तुरूपयोरुभयोरप्यर्थयोरलङ्कारस्य वाऽभिधयैव बोधस्तदा श्लेषालङ्कार इति भावः । इदमत्र तत्त्वं संयोगविप्रयोगादिन्यायेनाभिधानियामकेन अनेकार्थस्य शब्दस्यैकस्मिन्नर्थेऽभिधायां नियमितायामपरस्यार्थस्य बोधनमभिधया दुर्घटमिति अभिधामूलव्यञ्जनया यत्रापरार्थो बोध्यते स शब्दशक्त्युद्भवध्वनिः । तत्रास्य ध्वनेः शब्दपरिवृत्त्यसहत्वमूलकत्वात् शब्दशक्त्युद्भवत्वं बोध्यम् । यत्र पुनः संयोगादिन्यायविरहात् अनियताभ्यामभिधाभ्यामेवार्थद्वयं समशिरस्कं बोध्यते स श्लेष इति भावः । श्लेषविषयस्य व्यञ्जनासम्पर्कशून्यत्वात् न ध्वनिनाऽऽक्रमणं संभवितुमर्हति । न वा ध्वनिविषयस्य श्लेषेणाक्रमणसंभवः, उक्तयुक्तेः । अत एवोक्तकारिकायाम् आक्षिप्तपदोपादानं कृतं तेनालङ्कारान्तरस्यापि वाच्यत्वे श्लेषः, व्यङ्ग्यतायान्तु ध्वनिरिति नावकाशता ध्वनेरिति भावः । एवञ्च 'येन ध्वस्तमनोभवेन'—इत्यादौ अभिधानियामकप्रकरणादिविरहात् अर्थद्वयस्य वाच्यतयैव बोधात् श्लेष एव न तु ध्वनिः। तदुक्तं विवृतौ —'यत्र शब्दशक्त्याऽभिधया साक्षादलङ्कारान्तरं वाच्यं सत् प्रतिभासते स सर्वः श्लेषस्य विषयः, यत्र तु शब्दशक्त्या व्यञ्जनया प्रत्यायितं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः' इति । तत्र 'तस्या विनाऽपि हारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ॥' इत्यत्रापाततो भासमानस्य विरोधस्य निसर्गादिपदसान्निध्येन 'हारिणौ' इत्यस्य मनोहरार्थकया कल्पनेन विरोधाभासे परिणामः । स च साक्षात् वाच्यभूतः । शृङ्गारव्यभिचारिभावो विस्मयश्च स्वशब्दसाक्षाद्वाच्यः । इति विरोधानुप्राणकस्य श्लेषस्यायं विषयः, न तु अनुस्वानोपमव्यङ्ग्यस्य ध्वनेः। परन्तु 'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः । पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥' इत्यत्र वर्षावर्णनप्रकरणेन मेघपक्षीयार्थे अभिधाया नियमनात् स्तनपक्षीयार्थः, पयोदकुचयोरुपमानोपमेयभावश्च व्यज्येते इति ध्वनिः । पयोधरादिशब्दानां परिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वमस्य बोध्यम् ।

आक्षेपध्वनेः—'स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान् गुणान्। योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः॥' इत्युदाहरणे यथाऽम्बुकुम्भैः पयोधेः परिमाणं ज्ञातुमशक्यम् तथा हयग्रीवगुणा वर्णयितुमशक्या इति वाच्यभूतयाऽतिशयोक्त्या निदर्शनया वा हयग्रीवगुणानां कथनशक्यत्वनिषेधात् आक्षेपालङ्कारो ध्वन्यते। रुय्यकमते तु निषेधस्यैवात्र व्यज्यमानत्वं न तु निषेधाभासस्येति तन्निमित्तक एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपध्वनिरत्र, अपि तु 'गणिकासु विवेको न विश्वासो वल्लभ! त्वया। किं किं न कुर्वतेऽस्यर्थमिमा धनपरायणाः' इत्युदाहरणं बोध्यम्' अर्थान्तरन्यासध्वनेः—'दैवायत्ते फले'-इत्युदाहरणं शब्दशक्तिमूलकं 'हृदयस्थापितमन्युं'—इत्युदाहरणमर्थशक्तिमूलकं बोध्यम्। विशेषरूपेणार्थान्तरन्यासध्वन्यलङ्कारस्तु पूर्वं प्रदर्शित एवेति तत एवावसेयः।

**(३८) प्रश्नः—'तस्या विनापि हारेण निसर्गादेव हारिणौ। जनयामासतुः कस्य विस्मयं न पयोधरौ॥' अत्र विवक्षितविषयं प्रतिपाद्य, वस्तुव्यङ्ग्यालङ्कारस्थले 'व्यज्यन्ते वस्तुमात्रेण' इत्यादिना सर्वत्र ध्वन्यता स्वीकृता, अलङ्कारव्यङ्ग्यालङ्कारस्थले नेत्यत्र किं बीजम्? इति प्रतिपादयत।**

उत्तरम्—'तस्या विनापि हारेण'—इति पद्ये यद्यपि हारमन्तराऽपि 'हारिणौ' हारवन्ताविति कथनेन विरोधः प्रतिभासते, तथापि तस्य 'मनोहरौ' इत्यर्थकरणेन विरोधोऽपाकृतो भूत्वा विरोधाभासे परिणमते। स च विरोधाभासः—'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति लक्षणलक्षितः अपिशब्देन साक्षाद् वाच्यतया प्रतिपाद्यते शृङ्गाररसव्यभिचारिभावश्च विस्मयः स्वशब्देनैव साक्षात् प्रतिपाद्यते इति विरोधाभासस्य वाच्यतयैव प्रतीत्या तदनुप्राणकस्य श्लेषस्यायं विषयः, न तु संलक्ष्यक्रमव्यङ्ग्यध्वनेरिति भावः। परन्तूक्तयुक्त्या संलक्ष्यक्रमव्यङ्ग्यालङ्कारध्वनेरविषयत्वेऽपि वाच्यभूतेन श्लेषानुप्राणितविरोधाभासेन व्यञ्जनावृत्त्याऽभिव्यञ्जितस्यासंलक्ष्यक्रमव्यङ्ग्यस्य शृङ्गाररसध्वनेर्विषयताऽस्त्येवेति नात्र सर्वथा ध्वन्यभाव इति हृदयम्।

'व्यज्यन्ते वस्तुमात्रेणे'त्यादेरयमाशयः—व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायां सत्यामेव ध्वनावन्तःपातो भवति, अन्यथा तु गुणीभूतव्यङ्ग्यत्वमेव। अङ्गित्वेन व्यङ्ग्यतायामपि अलङ्काराणां द्वयी गतिः—कदाचित् वस्तुमात्रेण व्यज्यन्तेऽलङ्काराः, कदाचिदलङ्कारेण च। तत्र 'प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्'—

इत्यादौ वस्तुना प्राधान्येन रूपकालङ्कारो व्यज्यते, 'कारतीयविभोः'—इत्यादौ च निदर्शनालङ्कारेणाधिकालङ्कारो व्यज्यते। तत्र वस्तुव्यङ्ग्यालङ्कारस्थले व्यङ्ग्यार्थबुबोधयिषयैव कवे रचनात्मकव्यापारस्य जायमानतयाऽलङ्काराणां वाच्यवाचकावधिकोत्कर्षेण व्यङ्ग्यतायामवश्यं ध्वन्यात्मत्वं बोध्यम् । यागप्रवृत्त्युद्देश्यस्वर्गवत् काव्यप्रवृत्त्युद्देश्यप्रतीतिविषयव्यङ्ग्यार्थस्य प्राधान्यौचित्यात् । प्राधान्येन व्यङ्ग्यार्थाप्रकाशकत्वे तु शब्दार्थयोः सहृदयहृदयहारित्वाभावेन काव्यत्वमेव न संभवति यस्मात् तत्र तथाविधवस्तुव्यङ्ग्यालङ्कारपरत्वेनैव काव्यस्य कृतत्वात् । अन्यथा तु 'देवदत्तो ग्रामं गच्छति' इत्यादिवत् वाक्यमात्रमेव स्यात् न तु काव्यम् । एवञ्चालङ्काराणां वस्तुव्यङ्ग्यतायां ध्रुवं ध्वनिरूपत्वम् । तदाह—'व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा । ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्'। इति। किन्तु तेषामेवालङ्काराणामलङ्कारान्तरव्यङ्ग्यभावे विच्छित्तिजनकत्वसमनियतसौन्दर्यस्याधिक्यात् यदि व्यङ्ग्यानामेवालङ्काराणां प्राधान्यं प्रतीयते तदा ध्वनिव्यवहारप्रयोजकत्वमवधेयम् । व्यङ्ग्यालङ्कारप्राधान्याभावे तु वाच्यालङ्काराणामेव प्राधान्यमिति गुणीभूतव्यङ्ग्यतैव काव्यस्येत्याकूतम् । यतो हि 'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा भवति' इत्यस्य बहुशः प्रतिपादितत्वात् । तदुक्तम् 'अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत्। चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥' इति ।

**(२९) प्रश्नः—'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् । अपृथग्यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥' एषा कारिका सप्रघट्टं व्याख्यायताम् । अलङ्काराणाञ्च कथंकारं रसाङ्गत्वमिति चोच्यताम् ?**

उत्तरम्—रसादिष्वलंकारयोजनोपायः प्रदर्श्यते—रसाक्षिप्ततयेति। अयं भावः—रसादिध्वनौ स एवालंकार उपकारकतया प्रसिद्धः, योऽपृथग् यत्नेन निर्वर्त्यो नान्तरीयकतया रसनिबन्धानुकूलप्रयासेनैव निष्पाद्यो भवेत्, अपि च यस्य बन्धो विरचनम् रसाक्षिप्ततया रसैकतानतया शक्यक्रियः कर्तुं योग्यो भवेत्, अर्थात् रसनिबन्धानुकूलव्यापारेणैवानुषङ्गिकतयाऽकस्मात्क्षिप्तानामेव अलंकाराणां मुख्यमलङ्कारत्वम्, अन्येषां तु विशेषप्रयत्नसाध्यानां तत्साम्याद् गौणमेवेति भावः । तेन विप्रलम्भशृङ्गारस्य नितरां सुकुमारतया तस्य लेशमात्रमपि अन्यव्यासङ्गसहत्वाभावेन तद्ध्वनौ यमकादिबन्धो न कर्तव्यः । तदुक्तम्—'ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् । शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥' इति । अपृथग्यत्ननिर्वर्त्यालङ्कारस्योदा-

हरणं यथा—'कपोले पत्राली करतलनिरोधेन मृदिता, निपीतो निश्श्वासैरयममृत-हृद्योऽधररसः । मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं, प्रियो मन्युर्जातस्तव निरनुरोधे ! न तु वयम् ॥' इति । अत्र वक्त्रपेक्षया मानस्य अधिकप्रेयसीप्रियत्वेन अनायासेन सम्पद्यमानो व्यतिरेकालंकारोऽपृथग्यत्ननिष्पन्नत्वात् विप्रलम्भशृङ्गारध्वनि-मुपस्करोतीति तस्य तदङ्गत्वं स्पष्टमेव प्रतिभाति । यमकादीनान्तु न रसध्वनेरङ्गत्वम्, नहि प्राक्प्रदर्शितव्यतिरेकवत् रसवासनयैव विपुलं यमकमपि विशेषायासमन्तरेण कविना निबन्धुं शक्यम्, व्यापारान्तरसाध्यत्वात्, तस्मान्न रसाङ्गं यमकम् । अलङ्का-रान्तराणि तु प्रतिभानवतः कवे रसानुकूलप्रयासेनैव निष्पद्यन्ते इति तेषां नैव यमक-तुल्यत्वम् । तदुक्तं—'रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् । एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः' । यमकादिनिबन्धे तु पृथग् यत्नोऽस्य जायते । शक्तस्यापि रसेऽ-ङ्गत्वं तस्मादेषां न विद्यते । ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः । रूपकादिर-लंकारवर्ग एति यथार्थताम् ॥' इति ।

यद्यपि 'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः । अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥' इति कारिकानुसारमलंकाराणां शब्दार्थाङ्गत्वमेव प्रतीयते तथापि 'रसभावादितात्पर्यमाश्रित्य विनिवेशनम् । अलंकृतीनां सर्वासामलंकारत्व-साधनम् ॥' इति रीत्या रसादेः काव्यात्मभूतस्योत्कर्षं कुर्वतामेवोपमादीनामलङ्कार-त्वम् । न च वाच्यवृत्तीनामुपमादीनां रसोत्कर्षकत्वमसंभवीति वाच्यम् ? शरीरवृत्तीनां कटककुण्डलादीनां शरीरद्वाराऽऽत्मन इव शब्दार्थवृत्तीनामुपमादीनां तदात्मभूतस्य रसादेः परम्परयोत्कर्षजनकत्वात् । अर्थात् यथा वलयकेयूरादयो न शरीरमात्रमलं-कुर्वन्ति, किन्तु तद्द्वारा आत्मानं, कथमन्यथा शवशरीराश्रयिणां तेषां नालङ्कारत्वम् तथैवोपमादयो न केवलं काव्यावयवभूतशब्दार्थमेवालंकुर्वन्ति, अपितु काव्यात्मभूतं रसादिकमिति भावः । एवञ्च रसादीनां प्राधान्ये ध्वनिः, उपमादीनां तदुपकारकत्वेऽ-लंकारत्वमिति सारः ।

(४०) प्रश्नः—यथा 'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभि-धानः फुल्लमल्लिकाधवलाट्टहासो महाकालः' इत्यस्मिन् सन्दर्भे प्रक-रणनिर्देशपूर्वकं ध्वनेर्वैशिष्ट्यं सम्यक् प्रतिपादनीयम् ।

उत्तरम्—यत्रानेकार्थस्य शब्दस्य संयोगादिभिरेकस्मिन्नर्थेऽभिधायां नियमि-तायां द्वितीयार्थश्चाभिधामूलव्यञ्जनयैव प्रत्याय्यते तत्र शब्दशक्तिमूलसंलक्ष्यक्रमव्य-

ङ्गयध्वनेर्विषयत्वमवसेयम् । तदर्थस्याभिधामूलव्यञ्जनागम्यतया केवलाभिधायाः प्रतिरुद्धत्वात्, यथा—अत्रान्तरे कुसुमसमययुगमित्यादि गद्ये ऋतुवर्णनप्रकरणेन ग्रीष्मपक्षीयार्थेऽभिधायां नियन्त्रितायां शिवपक्षीयार्थस्य शिवग्रीष्मयोरुपमानोपमेयभावकल्पनद्वारा उपमायाश्च प्रतीतिरभिधामूलव्यञ्जनयैव भवतीति शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्योपमालंकारध्वनेरुदाहरणमिदं बोध्यम् । महाकालादिशब्दानां परिवर्तने च ग्रीष्म–शिवोभयपक्षीयार्थस्यालाभेन पर्यायपरिवृत्तिसहत्वाभावात् शब्दशक्तिमूलत्वमस्य बोध्यम् ।

(४१) प्रश्नः—'श्रममरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्,
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्'

इति पद्ये ध्वनिवैशिष्ट्यनिराकरणपूर्वकं विवक्षितविषयं प्रतिपाद्य विरोधाभासध्वनेरुदाहरणं प्रतिपादयत ।

उत्तरम्—काऽपि सहचरी नायिकाऽवस्थां नायकम्प्रति बोधयितुं सामान्यतो वर्षावर्णनपरतया प्रतिपादयति—जलदरूपसर्पात् जायमानं विषं जलमेव विषं गरलं विरहिणीनां श्रमं शिरश्चङ्क्रमणम्, अरतिं विषयानभिलाषम्, अलसहृदयतां मानसिकोदासीनतां, प्रलयं बहिरिन्द्रियव्यापारराहित्यं, मूर्च्छां बाह्यान्तरेन्द्रियव्यापारशून्यत्वं, तमो मोहं, शरीरसादं तनोः कृशतां पीडां वा मरणं प्राणनिर्गमं च प्रसह्य बलात् कुरुते इति भावः । अत्र जलद एव भुजग इति रूपकं 'विषञ्च गरले तोये' इति कोशात् सलिलगरलार्थकविषपदश्लेषः साधयतीति श्लेषानुगृहीतो रूपकालंकारो वाच्यतयैव प्रतीयते इति न शब्दशक्तिमूलरूपकध्वनिः, अपितु श्लेषरूपकयोरङ्गाङ्गिभावलक्षणः सङ्कर एव वाच्यभूतो विच्छित्तिविशेषाधायक इति ।

विरोधाभासध्वनेरुदाहरणम्—'सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् । चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥' इति । अयमाशयः—सर्वेषाम् एकं शरणं गृहम्, अक्षयं क्षया गृहं तद्भिन्नमिति आपातत एव विरोधः प्रतिभासते, तथा हि सर्वेषां स्थावरजङ्गमानामेकं प्रधानं शरणं रक्षकम् अक्षयम् अविनाशिनम् इति विरोधः परिहृतः सन् विरोधाभासे परिणमते, एवं न धियां बुद्धीनामीशं धियामीशमिति विरोधः, परन्तु अधीशमित्यस्याधिपतिमित्यर्थेन विरोधपरिहारः हरिं हरितवर्णं, कृष्णं श्यामवर्णमिति विरोधः, हरिं विष्णुं कृष्णं तदाख्यमिति परिहारः, चतुरः क्रियानिपुण आत्मा यस्य तं, निष्क्रियं क्रियारहितमिति विरोधः, चत्वारः कृष्णबल-

रामप्रद्युम्नानिरुद्धनामानो मूर्त्तिसमूहरूपा आत्मानो यस्य तमित्यर्थेन तत्परिहारः, अराणि नाभिनेम्योरन्तराले स्थिता रथाङ्गावयवाः सन्त्यस्मिन्निति अरि चक्रम्, तस्य मथनं विध्वंसकं, चक्रधरं चक्रस्य धारकमिति विरोधः, अरीणां रिपूणां मथनं नाशकमित्यर्थद्वारा तत्परिहारः, एतादृशं भगवन्तं नमस्कुरुतेति भावः। अत्र क्वचिदपि विरोधाभिधायकस्यापिशब्दादेः साक्षात्प्रयोगाभावेनापाततः प्रतीयमानविरोधस्य परिहरणद्वारा श्लेषानुप्राणितो विरोधाभासः संलक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति भावः।

(४२) प्रश्नः—'दृष्टया केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनैव स्खलिताऽस्मि नाथ ! पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-
र्गोप्येवं गदितः सलेशमवताद् गोष्ठे हरिर्वश्चिरम् ॥'

इत्यस्मिन् पद्ये ससन्दर्भं विवक्षितविषयं प्रतिपाद्य शब्दशक्तिमूलध्वनेरुदाहरणं प्रतिपादयत।

उत्तरम्—यत्र व्यञ्जनया प्रत्यायितोऽप्यलंकाररूपो व्यङ्ग्यार्थः पुनः केनचित् शब्दान्तरेणाभिहितस्वरूपो भवति, तत्र व्यङ्ग्यस्य वाच्यसदृशत्वेन रमणीयत्वाभावात् न शब्दशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यपदेशः अपि तु गुणीभूतव्यङ्ग्यतया वाच्यालंकाराणामेव व्यपदेशो भवति, अर्थात् पद्यघटकेनैकेनापि पदेन यदि स व्यङ्ग्यार्थोऽभिहितः स्यात्तर्हि न कथमपि किञ्चिन्निगूढकामिनीकुचकलशत्ववत् व्यङ्ग्यत्वधर्मं प्राप्तुमर्हो भवतीति न तत्र ध्वनिव्यवहारः, यथा—'दृष्टया केशव' इति पद्ये उभयार्थकानामपि गोपरागादिशब्दानां पूर्वं प्रकरणेन गोधूल्यादिष्वेवार्थेषु अभिधायां नियन्त्रितायां द्वितीयार्थस्य यद्यपि प्रथमं व्यङ्ग्यतयैव प्रतीयमानतया चमत्कारातिशयाधानद्वारा ध्वनेः संभावना तिष्ठति, तथापि पश्चात् सलेशशब्दप्रयोगेण प्रथमार्थे नियन्त्रिताया अपि अभिधायाः प्रत्युज्जीवितत्वेन द्वितीयार्थबोधस्यापि अभिधयैव सम्पद्यमानतया उभयोरप्यर्थयोर्वाच्यत्वेन वाच्यश्लेषस्यैवायं विषयो न तु शब्दार्थोभयमूलशक्तिध्वनेरिति भावः।

शब्दशक्तिमूलध्वनेरुदाहरणम्—'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः । पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥' इति बोध्यम्। अयमाशयः—उन्नतः गगनव्याप्तः, पक्षान्तरे यौवनप्रयुक्तोत्थितः, प्रोल्लसद्धारः प्रकर्षेणोल्लसन्ती निपतन्ती धारा जलाऽऽसारो यस्मात् सः, पक्षान्तरे प्रकर्षेणोल्लसत् मुक्ताहारो यत्र सः,

कालागुरु सुगन्धिद्रव्यविशेषः तद्वत् मलीमसः श्यामवर्णः, पक्षान्तरे कालागुरुणा तन्नामकचूर्णद्रव्यविशेषेणोपलक्षिततया मलीमसः, पयोधरभरः मेघमाला पक्षान्तरे कुचोच्चत्वं, तन्व्याः कृशाङ्गया अभिलाषिणं कामुकं कं न चक्रे अपितु सर्वानेव चक्रे इति काका गम्यते इति भावः ।

अत्र वर्षासमयवर्णनप्रकरणेन मेघपक्षीयार्थेऽभिधाया नियमनात् स्तनपक्षीयार्थो मेघस्तनयोरुपमानोपमेयभावश्च व्यज्येते एवेति शब्दशक्तिमूलौपम्यध्वनिः । हारपयो-धरादिशब्दानाञ्च पर्यायपरिवर्तने विवक्षितार्थालाभेन शब्दशक्तिमूलत्वमस्य बोध्यम् ।

**(४३) प्रश्नः—'दत्तानन्दाः प्रजानाम्'— अत्रत्यध्वनेर्वैशिष्ट्यं नामनिर्देश-पुरःसरं समुपपादनीयम् ।**

उत्तरम्—'दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः, पूर्वाह्णे विप्र-कीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः । दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्व-दुत्तारनावो, गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥' इति पद्यं शब्द-शक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणमिदं बोध्यम् तथाहि—गाव इत्यस्य किरण-पक्षीयं वाच्यार्थं बोधयित्वा विरतायामभिधायां धेनुपक्षीयोऽर्थः, तथा तादृशवाच्यार्थ-व्यङ्ग्यार्थयोरसम्बद्धत्वनिराकरणाय परस्परसमन्वयसम्पादनार्थं 'गाव इव गाव' इति कल्पितमौपम्यञ्च व्यञ्जनया व्यज्यते इति संलक्ष्यक्रमव्यङ्ग्यध्वनेरेवात्र विषयता प्रतीयते न तु श्लेषालंकारस्येति भावः । तथाहि—अत्र अनेकार्थस्य गवादिशब्दस्य संयोगादिभिरेकस्मिन्नर्थे किरणरूपेऽभिधायां नियमितायां धेनुरूपद्वितीयार्थस्य अभि-धामूलव्यञ्जनयैव प्रकाशनात् केवलाभिधायाः प्रतिरुद्धतया श्लेषस्य न विषयत्वम्, अपितु शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यध्वनेरेवेति । तदुक्तम्—'आक्षिप्त एवा-लंकारः शब्दशक्त्या प्रकाशते । यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥' इति । अर्थात् यत्र शब्दशक्त्या साक्षाद् अलंकारान्तरं वाच्यं सत् प्रतिभासते स सर्वः श्लेषविषयः । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवा-लंकारान्तरं प्रकाशते स ध्वनेर्विषयः इति । प्रकृते च स्तुतिप्रकरणेन गोशब्दादीनां किरणरूपेऽर्थेऽभिधाया नियन्त्रणात् गोशब्दपरिवर्तने च किरणधेनुरूपार्थद्वयस्यालाभेन पर्यायपरिवृत्तिसहत्वाभावेन शब्दशक्तिमूलत्वञ्चास्य ध्वनेरवसेयमित्याकूतम् ।

**(४४) प्रश्नः—अधस्तनः सन्दर्भो विवक्षितार्थप्रदर्शनपूर्वकं व्याख्यायताम्— 'यत्र च मत्तमातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च श्यामाः**

पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिराऽऽमोदिश्वसनाश्च, चन्द्रकान्त-वपुषः शिरीषकोमलाङ्ग्यश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च, लावण्यवत्यो मधुरभाषिण्यश्च, अप्रमत्ताः प्रसन्नो-ज्ज्वलरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः ।' इति ।

उत्तरम्—अयमाशयः—यत्र स्थाण्वीश्वराख्यजनपदे प्रमदाः ललना एतादृश्यः सन्तीति सर्वत्र सम्बन्धो बोध्यः अपिशब्दाद्येण च विरोधः स्फुटमासादनीयः । मत्तान् मातङ्गान् चाण्डालान् गन्तुं रमयितुं शीलवत्योऽपि सदाचारशालिन्य इति विरोधः आपाततः प्रतीयते, मत्तहस्तिगामिन्य इति तत्परिहारात् गौर्यः पार्वत्यः विभवे शिवभिन्ने रताः इति विरोधः, गौरवर्णाः द्रविणे रता इति तत्परिहारः । श्यामाः कृष्णवर्णाः अपि पद्मरागवत् लौहित्यं दधाना इति विरोधः, श्यामा षोडश-वार्षिकी इति कोशात् षोडशवर्षवयस्काः प्रौढाः कामिन्यः पद्मरागमणिशालिन्यश्चेति परिहारः । धवलद्विजशुचिवदना शुद्धब्राह्मणादिवत् पवित्राननाः अपि मदिरामोदि-श्वसनाः सुरावत्सुगन्धयुक्तनिःश्वासा इति विरोधः, धवलैः शुभ्रैः द्विजैः दन्तैः स्वच्छ-वदना इति परिहारः । चन्द्रकान्तवपुषः चन्द्रकान्तमणिनिर्मितशरीराः अपि शिरीष-पुष्पवत् कोमलाङ्ग्य इति विरोधः, चन्द्रवद्रमणीयशरीरा इति परिहारः । अभुजङ्ग-गम्याः सर्पेणानुपभोग्याः अपि, कञ्चुकिन्यः सर्पिण्य इति विरोधः, भुजङ्गेन विटेन षिड्गेण अगम्याः कूर्पासवत्यश्चेति परिहारः । पृथुकलत्रश्रियः पृथुराजस्त्रीसम्पत्तिशा-लिन्योऽपि दरिद्रमध्यकलिताः दीनजनमध्यपरिगणिता इति विरोधः, विशालनितम्ब-शोभाशालिन्यः कृशोदर्य इति परिहारः । लावण्यवत्यः क्षाररसयुक्ता अपि मधुर-भाषणशालिन्य इति विरोधः, लावण्यं नाम कान्तिविशेषं बिभ्राणा इति परिहारः । अप्रमत्ताः प्रमदरहिता अपि प्रसन्नोज्ज्वलरागाः उद्दीप्तमदकलिता इति विरोधः, अप्र-मत्ताः प्रमादरहिताः सावधाना इति यावत् शुद्धस्नेहशालिन्य इति परिहारः । अकौ-तुकाः अजातपरिणया अपि प्रौढाः कृतपरिणया इति विरोधः, अकौतुकाः पूर्णकाम-तया अभिलाषरहिताः प्रौढाः प्रगल्भा रतिधुरन्धरा इति यावत् इति विरो-धपरिहारः ।

एवञ्चात्र विरोधाभासवाचकस्य अपिशब्दादेः प्रयोगाभावेन अर्थद्वयस्य वाच्य-त्वाभावेन च श्लेषानुप्राणितो विरोधाभासो न वाच्यभूतः, अपितु व्यङ्ग्य एवेति शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यविरोधाभासध्वनिरिति बोध्यम् ।

(४९) प्रश्नः—सोदाहरणां नातिनिर्वहणैषितां निरूप्य श्लेषध्वनिमुदाहरणे संगमय्य प्रतिपादयत ।

उत्तरम्—रूपकाद्यर्थालंकाराणां शृङ्गारादिरसाङ्गत्वसाधकाः पञ्च नियमा निवेशनसमीक्षया प्रतिपादिताः—'विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन । काले च ग्रहणत्यागौ नातिनिर्वहणैषिता । निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् । रूपकादेरलंकारवर्गस्याङ्गत्वसाधनम् ॥' इति । तत्र रसोपकारकतया निबद्धरूपकादेरलंकारवर्गस्यात्यन्तनिर्वाहानिच्छारूपाया नात्यन्तनिर्वहणैषिताया अयमभिप्रायः—रसनिष्पादनैकतानहृदयः कविः यमलङ्कारं नात्यन्तं निर्वोढुमिच्छति, अर्थात् प्रबन्धघटकीकृतमपि न समाप्तिपर्यन्तं निनीषति, स यथा प्रकृतरसमुपकुर्वन् वास्तविकालङ्कारत्वं भजते तदुदाहरणमाह—

'कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं, नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः । भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं, धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥' इति । अत्र बाहुलतिकापाशेत्यादिना कविना रूपकं प्रारब्धं न तु समाप्तिपर्यन्तं नीतं तथा सति नितरामर्थासङ्गतिरापद्येत । तदुक्तं लोचने—'बाहुलतिकायाः पाशत्वेन रूपणं यदि कविः समाप्तिपर्यन्तं निर्वाहयेत् तदा दयिताव्याधवधूः वासगृहं कारागारपञ्जरादीति परमनौचित्यं स्यादिति ।

श्लेषध्वनेः—'रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्ती ।
यस्यामसेवन्त नमद्वलीकाः, समं वधूभिर्वलभीर्युवानः ॥'

इत्युदाहरणे श्लेषालंकारः प्रधानतया व्यज्यते । तथा हि यस्यां द्वारकायां युवानो वधूभिः सह वलभीरसेवन्तेति प्रथमं तावदत्र सहोक्त्यात्मकवाक्यार्थः प्रतीयते, तदनन्तरं वध्व इव वलभ्य इत्युपमा ध्वन्यते, पर्यन्ते च तन्निर्वाहकतया व्यञ्जनामहिम्ना विच्छित्तिविशेषावायकोऽर्थश्लेषो व्यज्यते । अत्र तुल्यार्थप्रतीतिरपि व्यङ्ग्यश्लेषमहिम्नैवेति—अभिधेयार्थबोधानन्तरं सुन्दराभिधेयाभिव्यञ्जितस्य श्लेषस्यैव प्रतीयमानत्वेन सहृदयानां पार्यन्तिकास्वादभूमितया ध्वनित्वं बोध्यम् । अत एव वध्व इव वलभ्य इति प्रतिपाद्यताऽपि वृत्तिकृता उपमाध्वनिरिति नोक्तम् । श्लेषस्यैवात्र तन्मूलत्वात् । न चैवं सर्वत्रैवोपमास्थलेषु श्लेषध्वनिः संभवेदिति वाच्यम् ? 'सकलकलं पुरमेतज्जातं परितः सुधांशुबिम्बमिव' इत्यादौ सकलकलांशे शब्दश्लेषस्य 'कमलमिव मुखं मनोज्ञमेतत्' इत्यादौ मनोज्ञांशेऽर्थश्लेषस्य वाच्यतयैव प्रतीतेः ।

(४६) प्रश्नः—

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

इति पद्ये व्यङ्ग्यार्थसत्त्वेऽपि ध्वनित्वाभावे बीजमुपपाद्य, यथासंख्यालंकारध्वनिं लक्ष्ये संगमय्य प्रदर्शयत ।

उत्तरम्—यत्र वाच्यार्थः कस्याप्यन्यशब्दस्याभिधायाः साहाय्येनैव विवक्षितव्यङ्ग्यार्थं प्रत्याययति, तत्र संलक्ष्यक्रमव्यङ्ग्यरूपार्थशक्त्युद्भवध्वनेर्विषयता न भवति, अपितु गुणीभूतव्यङ्ग्यस्यैव काव्यस्य, यथा 'सङ्केतकालमनसम्' इत्यत्र कयाचित् चतुरया कामुक्या संभोगार्थसमागमयोग्यसङ्केतसमयं जिज्ञासोः कामुकपुरुषस्याशयं ज्ञात्वा किञ्चित्प्रफुल्लनयनेङ्गितैः स्वाभिप्रायं सूचयन्त्या स्वहस्तस्थक्रीडाकमलं निमीलितम् । एवञ्च लीलाकमलनिमीलनरूपवाच्यार्थेनाकूतशब्दस्याभिधात्मकव्यापारसाहाय्येनैव समागमयोग्यसायंकालरूपो व्यङ्ग्यार्थः प्रत्यायितः, इति कमलसंकोचनरूपवाच्यार्थेन यद्यपि सायंसमयरूपः सङ्केतकालो ध्वन्यते इति ध्वनेः संभावना वर्तते तथापि आकूतशब्देनैव स व्यङ्ग्यार्थः प्रकाशितः इति व्यङ्ग्यार्थस्य वाच्यसदृशत्वापत्त्या न ध्वनित्वम्, अपि तु गुणीभूतव्यङ्ग्यतैवेत्याकूतम् । न चाकूतशब्दस्य तादृशव्यङ्ग्यार्थेऽभिधाशक्त्यभावेन कथं न ध्वनित्वमिति वाच्यम् ? अभिधाविरहेण तादृशव्यङ्ग्यस्यार्थस्य वाच्यायमानत्वाभावेऽपि आकूतशब्देनार्थान्तरस्य व्यञ्जकोऽत्र शब्दोऽस्तीति सूचनद्वारोक्तव्यङ्ग्यार्थे वाच्यसदृशत्वापादनसंभवात् ।

यथासंख्यध्वनेः—

'अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः ।
अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः ॥'

इत्युदाहरणं बोध्यम् । अत्र वसन्तवर्णने प्रस्तुतयोर्मदनसहकारयोरङ्कुरणादिसमानधर्मसम्बन्धितया तुल्ययोगिता, उभयोरङ्कुरणादीनां युगपदेव जायमानतया समुच्चयश्चालङ्कारो वाच्यतयैव प्रतीयते । ततो निष्पन्ने वाच्यार्थबोधे येनैव क्रमेण सहकारसम्बन्ध्यङ्कुरणादीनामुपर्युपादानम् तेनैव क्रमेण मदनसम्बन्धिनामपि तेषामधः प्रतिपादनमिति विचारणायाम् 'उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथासंख्यम्' इति लक्षणलक्षितो यथासंख्यालंकारो व्यज्यते इति यथासंख्यध्वनिः । तदुक्तं विवृतौ—'अत्र हि यथोद्देशो यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोः तुल्ययोगितासमुच्चयलक्षणाद् वाच्यादतिरिच्यमानमालक्ष्यते इति ।'

(४७) प्रश्नः—

'तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥'
'ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ ॥'

अनयोः पद्ययोर्विवक्षितार्थं प्रतिपाद्य प्रत्येकं ध्वनेर्वैशिष्ट्यं प्रतिपाद्यम् ।

उत्तरम्—'तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' इति पद्यस्यायमभिप्रायः श्रीसहोदररत्नस्य कौस्तुभमणेः आहरणे एकरसम्—एकतानं, तेषामसुराणां हृदयं यदासीत्, तत् हृदयं कुसुमबाणेन मदनेन प्रियाणां स्वप्रेयसीनां बिम्बफलसदृशे रक्ताधरे निवेशितं स्थापितमिति भावः । अत्र वाच्यभूतयाऽतिशयोक्त्या कौस्तुभमणि-प्रियाबिम्बाधरयोरौपम्यं व्यज्यते, अन्ततः कौस्तुभमणितुल्यो बिम्बाधर इत्येव सहृदयानां प्रतीतेः सत्वात् । अत एवात्र न रूपकध्वनिरप्याशङ्कनीयः, तत्रोपमानस्यारोप्यमाणत्वेनावास्तविकत्वात् । तथा चात्रोपमाध्वनिरवगन्तव्यः ।

एवम् 'ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः । अद्य सदृशत्वं प्राप्याङ्ग एव न माति ॥' इत्यस्यायं भावः—अयि मानिनि ! एष पूर्णिमाचन्द्रो मद्विषयिकया सपत्नीविषयिकया वा ईर्ष्यया कलुषीकृतस्यापि ( का कथा प्रसन्नस्य ) त्वन्मुखस्य सादृश्यम् अधुना लब्ध्वा नन्विति निश्चयेन अङ्गे स्वावयवे न मात्येव, अपि तु ज्योत्स्नाव्याजेनानन्दैः दश दिशः पूरयतीवेत्यर्थः । लोकेऽपि प्रसिद्धमेतत् यदकिञ्चनो जनः किमप्यलभ्यं लब्ध्वाऽत्यन्तं प्रसन्नः सन् आनन्देनाङ्गे न माति । अत्रोत्प्रेक्षावाचकेवादिशब्दप्रयोगाभावेऽपि 'दश दिशः पूरयतीव' इति क्रियोत्प्रेक्षा प्राधान्येन व्यज्यते । एवञ्च शब्दार्थव्यवहारे प्रसिद्धैरेव प्रमाणतयाऽत्रोत्प्रेक्षाप्रतीतेरानुभविकत्वात् इवादिशब्दाभावेऽपि तस्या अपलापो न भवितुमर्हतीति भावः ।

(४८) प्रश्नः—

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलान् अनङ्गस्य शरान् ॥'
शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥'

अनयोः पद्ययोर्ध्वनेर्वैशिष्ट्यं नामनिर्देशपुरस्सरं प्रतिपादयन्तु ।

उत्तरम्—'सज्जयति सुरभिमासः'—इति पद्ये अचेतनो वसन्तः शरनिर्माता, मदनो धन्वी, सहकारमञ्जर्यादयो बाणाः, नूतनकिसलयाः शरपत्राणि, युवतयश्च लक्ष्याणि, इत्यादिवस्तुरूपोऽर्थः कविप्रौढोक्तिमात्रसिद्धः, यतो हि लोके न कामदेवस्य धानुष्कत्वं दृश्यते, न वा तदीयो बाणः क्वचिद् दृष्टिगोचरो भवति। अतः कविप्रौढोक्ति-मात्रसिद्धोक्तवस्तुना वसन्तस्य मन्मथोन्माथदायकत्वं वस्तु प्राधान्येन व्यज्यते इति अर्थशक्त्युद्भवसंलक्ष्यक्रमकविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिरत्र बोध्यः। सुर-भिमासादीनाञ्च कविप्रौढोक्तिविषयीकरणादेव व्यञ्जकत्वम् भवति। इतरथा वसन्त-कालीनसहकारमञ्जरीनूतनपल्लवोद्गमस्य साधारणवस्तुनो व्यञ्जकत्वं न स्यात्। अत्र सुरभिशब्दादीनां पर्यायपरिवृत्तिसहत्वेनार्थशक्त्युद्भवत्वमस्य बोध्यम्।

एवं 'शिखिपिच्छकर्णपूरा'—इति पद्ये स्वतः संभविनाऽत्यन्तगर्वशालिव्याध-वध्वाः मुक्ताफलरचितप्रसाधनसपत्नीजनमध्यभ्रमणलक्षणेन वस्तुनः सपत्नीनां रति-पर्यायदिवसेषु वल्लभस्य भोगविलासैकलग्नमनस्त्वाभावात् हस्तिनोऽपि व्यापादयितुं क्षमतायाः सूचनद्वारा तासां दौर्भाग्यातिशयः, स्वस्या रतिवासरेषु तु तस्य (वल्लभस्य) सततमदनसमरपरायणस्य नितान्तक्षीणतया ताम्परित्यज्य गन्तुमवकाशाभावेन वाऽनायासवधयोग्यान् गृहनिकटचरान् वा मयूरानेव हन्तुं सामर्थ्यस्य सूचनद्वारा स्वसौभाग्यप्रकर्षात्मकं वस्तु व्यज्यते इति स्वतः संभविवस्तुव्यङ्ग्यवस्तुलक्षणोऽर्थ-शक्त्युद्भवध्वनिरिह प्रतीयते। अत्र शिखिपिच्छादिशब्दानां पर्यायपरिवर्तनेऽपि विवक्षितार्थबोधे बाधाभावेन परिवृत्तिसहत्वेनार्थशक्तिमूलत्वमस्य बोध्यम्।

(४९) प्रश्नः—

'साअर विइण्ण जोव्वण हत्थालम्बं समुण्णमन्तेहिं।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं थणेहिं॥'।

अस्मिन् पद्ये विवक्षितार्थप्रतिपादनपुरस्सरं ध्वनेर्वैशिष्ट्यं प्रतिपाद्य, कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारव्यङ्ग्यालंकारध्वनेरुदाहरणं सबीजमुप-पाद्यताम्।

उत्तरम्—'सादरवितीर्णयौवनहस्तालम्बं समुन्नमद्भ्याम्। अभ्युत्थानमिव मन्म-थस्य दत्तं तव स्तनाभ्याम्॥' इत्यस्यायमभिप्रायः—अयि मुग्धे! आदरपूर्वकं यौवनेन वितीर्णस्य स्वकरस्यावलम्बनं विधाय समुन्नमद्भ्यां तव कुचाभ्यां समागतस्य मन्म-थस्याभ्युत्थानमिव कृतमित्यर्थः। एताभ्यां यौवनेनोत्थाप्यमानाभ्यां तव स्तनाभ्यां कामदेवः सत्कृतः अर्थात् त्वमत्यन्तरतिसंभोगयोग्यासि इति भावः सूच्यते। अत्रत्य-

आढ्यादिवशात् झटिति स्वयमुत्थातुमसमर्थेन जनेनानुचरहस्तावलम्बनेनोत्थाय समागच्छतो गुरुजनस्याभ्युत्थानं क्रियते इति लोकव्यवहारदर्शनात् प्रधानाभ्यामपि स्वयमुत्थातुमसमर्थाभ्यां तव स्तनाभ्यां यौवनरूपानुचरकरावलम्बनं कृत्वाऽभ्यर्हितस्य कामस्याभ्युत्थानमिव कृतमिति समासोक्त्युत्प्रेक्षयोः सङ्करः प्रतीयते । अत्र यौवनेन कुचावुन्नमिताविति सामान्यार्थस्य नोक्तार्थव्यञ्जकत्वम् अपि तु कविनिबद्धकामुकजन-प्रौढोक्तिनिष्पन्नस्यैव तादृशार्थस्य, इति तस्य वस्तुनो लोकेऽसम्भावितया प्रौढोक्तिमा-त्रनिष्पन्नशरीरत्वं बोध्यम्, तथा च कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनि-रिहावगन्तव्यः ।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारव्यङ्ग्यालंकारध्वनेः—'महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती । अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥' इत्युदा-हरणे महिलासहस्रव्याप्ते नायकहृदये स्थातुमवकाशमप्राप्नुवती नायिकाऽवकाशं लब्धुं कृशमपि शरीरमनुदिनं कृशीकरोति इति नायकम्प्रति सख्या उक्तौ कृशस्यापि शरीरस्य कृशकरणे नायकहृदयेऽवकाशाप्राप्तेरेव हेतुतयोपन्यस्तत्वेन 'हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं प्रचक्षते' इति लक्षणलक्षितेन अमान्तीति कविनिबद्धवक्तृप्रौढोक्ति-सिद्धेन काव्यलिङ्गालंकारेण 'तनोस्तनूकरणेऽपि तव हृदये सा न वर्तते' इति विशे-षोक्त्यलंकारो व्यज्यते, तनुतनूकरणरूपकारणस्य सत्त्वेऽपि त्वद्धृदयवृत्तित्वरूपफलं नास्तीति विशेषोक्तिध्वनिः । न च कविनिबद्धप्रौढोक्तिसिद्धस्यापि कविप्रौढोक्तिसिद्धतया कथं तस्य पृथगुपादानमिति वाच्यम् ? कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्यावि-ष्टचित्ततया तद्व्यञ्जिकायाः प्रौढोक्तेरधिकचमत्कारकारित्वादिति भावः । ध्वन्यालोके तु 'प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्, निद्रामप्यस्य पूर्वामनल-समनसो नैव संभावयामि । सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥' इत्युदाहरणं प्रतिपादि-तम् । अत्र ससन्देहोत्प्रेक्षयोः परस्परमङ्गाङ्गिभावात्मकः सङ्करो वाच्यभूतः, ततश्चास्य राज्ञो भगवता सह तादात्म्यं प्रतीयते इति रूपकालंकारध्वनिः एवञ्च कविनिबद्धवक्तृप्रौ-ढोक्तिसिद्धतादृशसंकरालंकारव्यङ्ग्यरूपकालंकारध्वनिरिहावगन्तव्यः । तादृशोत्प्रेक्षणस्य वितर्कणस्य वा बाह्यजगति दृष्टिगोचरत्वाभावेन कविनिबद्धजनप्रौढोक्तिमात्रसिद्धत्वं बोध्यम् । यद्यप्यस्य भूपतेः प्राप्तलक्ष्मीकत्वेन लक्ष्मीप्राप्तये पयोधिं मथ्नतः, आल-स्यरहितचित्तत्वेन समुद्रे शेषशय्यायां निद्रालुमिच्छतः सकलद्वीपनाथानुस्रियमाणत्वेन

रावणं जेतुं सेतुनिर्माणञ्च कुर्वतो विष्णोरपेक्षयाऽऽधिक्यप्रत्ययात् व्यतिरेकोऽपि व्यज्यते तथापि न तस्य चमत्कृतिजनकत्वं सहृदयानामानुभविकं, विष्णावपि आधिक्यप्रयोजकधर्मत्रयस्य विद्यमानत्वात् ।

यथा वा—'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्, स्मेरेऽधुना तव मुखे तरलायताक्षि ! । क्षोभं यदेति न मनागपि तेन मन्ये, सुव्यक्तमेव जलराशिरयं पयोधिः ॥' इत्यपि कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारव्यङ्ग्यालंकारध्वनेरुदाहरणं बोध्यम् । अत्र हि 'जलराशिः' इति पदे डलयोरैक्यात् भावप्रधाननिर्देशेन च पक्षान्तरे जाड्यराशिरित्यर्थस्य श्लेषमहिम्ना लाभेन श्लेषानुप्राणितोत्प्रेक्षालंकारो वाच्यतया प्रतीयते, ततश्चोदितपूर्णचन्द्रदर्शनेन पयोधेः क्षोभस्य प्रसिद्धत्वेऽपि यदयं स्मितशालित्वन्मुखदर्शनेन न क्षुभितः, तस्मादेनं जडतमं मन्ये, एतावता तव मुखं चन्द्रः इति रूपकालंकारो व्यज्यते । इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्लेषानुप्राणितोत्प्रेक्षालंकारव्यङ्ग्यरूपकालंकारध्वनिरवसेय इति भावः ।

( ५० ) प्रश्नः—

'अर्थशक्तेरलंकारो यत्राप्यन्यः प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥
रूपकादिरलंकारवर्गो यो वाच्यतां श्रितः ।
स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः ॥'

कारिकाद्वयमिदं सप्रघट्टं सोदाहरणं व्याख्यायताम् ।

उत्तरम्—अर्थशक्त्युद्भवालंकारध्वनिं निरूपयति—अर्थशक्तेरलंकार इत्यादि । अयमाशयः—यत्र अन्यो वाच्यभूतालंकारादतिरिक्तो व्यङ्ग्यभूत इति यावत्, अलंकारोऽपि न वस्तुमात्रम्, अर्थशक्तेः अर्थनिष्ठव्यञ्जनावृत्तेः प्रकाशते प्रतीतिगोचरो भवति, सोऽनुस्वानोपमव्यङ्ग्यः, अनुरणनसदृशः संलक्ष्यक्रमव्यङ्ग्य इति यावत् ध्वनेरपरो वस्तुध्वनेरतिरिक्तोऽलंकारध्वनिर्नाम प्रकारो भवतीति भावः । एतावता यथा कविप्रौढोक्तिसिद्धादित्रिविधवस्तुना वस्तुनि व्यङ्ग्ये त्रिविधोऽर्थशक्त्युद्भवो वस्तुध्वनिः, तथैव कविप्रौढोक्तिसिद्धादित्रिविधालंकारेण अलंकारेऽपि व्यङ्ग्ये सति त्रिविधोऽर्थशक्त्युद्भवोऽलंकारध्वनिरिति फलितम् ।

अथ शब्दशक्तिमूलश्लेषाद्यलंकारध्वनेः संभवेऽपि अर्थशक्तिमूलालंकारध्वनेर्नैव संभव इत्याशङ्कां निरसितुमाह—'रूपकादिरलंकारवर्गो यो वाच्यतां श्रितः' इत्यादि ।

अयमाशयः—

यः खलु रूपकादिरर्थालंकारवर्गः, वाच्यतां श्रितः अभिधेयतां गतः, वाच्यभूत इति यावत् स सर्वोऽखिलः अलंकारवर्गः गम्यमानत्वं व्यङ्ग्यतां बिभ्रद् दधद् भूम्ना प्राचुर्येण प्रदर्शितः प्रतिपादितः तत्र भवद्भिः भट्टोद्भटादिभिरपीति शेषः । तेनालंकारध्वनेनैव प्रविरलविषयता संभवतीति भावः ।

इदमत्र तत्त्वम्—

बहुषु च वाच्यतया भासमानेषु रूपकादिषु अलंकारेषु परोऽप्यलंकारविशेषः प्रतीयते इति स्वीकुर्वद्भिरुद्भटादिभिरपि अर्थशक्त्याऽलंकारो व्यज्यते इत्यङ्गीकृतमेव, अन्यथा व्यञ्जनां विना वाच्यव्यतिरिक्तालंकारस्य प्रतीतेः संभवाभावात् । तथा च—

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे ॥'

इत्यादौ रघुपतिविशेष्यकमरकतमयपर्वतत्व–तरुणतमालतरुत्वरूपनानाप्रकारकज्ञानविशेषात्मकसंशयस्य प्रतीयमानतया ससन्देहालंकारे वाच्यतया भासमाने उद्भटादिभिरपि 'रघुपतेर्मरकतमयपर्वततमालतरुभ्यां साम्यस्य प्रत्ययादौपम्यं, तादात्म्यारोपाद् रूपकम्, तादात्म्याध्यवसानादतिशयोक्तिर्वा व्यङ्ग्यतया प्रतीयते' इत्यस्य प्रतिपादितत्वेन तादृशप्रतीयमानोपमादीनां वाचकपदाभावात् वाच्यत्वस्य वक्तुमशक्यतया तेषां मतेऽपि व्यङ्ग्यत्वस्यैवागत्या स्वीकरणीयतया निष्प्रत्यूहोऽलङ्कारध्वनिः सिद्ध इति ।

( ५१ ) प्रश्नः—

आनन्दवर्धनाचार्याभिमता ध्वनिप्रभेदा निरुच्यन्ताम् ।

उत्तरम्—लक्षणामूलोऽविवक्षितवाच्योनाम ध्वनिर्द्विविधः—अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च, अभिधामूलो विवक्षितान्यपरवाच्यो नाम ध्वनिः प्रथमं तावत् द्विविधः—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च, तत्रासंलक्ष्यक्रमव्यङ्ग्यो रसादिः सामान्यत एकविधोऽपि पद–वाक्य–प्रबन्ध–पदैकदेश–रचना–वर्णगतत्वेन षड्विधः । लक्षणामूलश्च पदवाक्यगतत्वेन चतुर्विधः । संलक्ष्यक्रमव्यङ्ग्यो वस्त्वलंकाररूपः त्रिविधः—शब्दशक्तिमूलः, अर्थशक्तिमूलः, शब्दार्थोभयशक्तिमूलश्च । तत्र शब्दशक्तिमूलो ध्वनिः वस्त्वलंकारभेदेन द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः । अर्थशक्तिमूलो ध्वनिः कविप्रौढोक्तिसिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्ध–स्वतःसंभविभेदैरर्थस्य त्रिविधत्वेऽपि वस्त्वलंकारभेदैः षड्विधत्वात् व्यङ्ग्य-

वस्त्वलंकारैः द्वादशविधः—कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिः, कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यालंकारध्वनिः, कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यवस्तुध्वनिः, कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यालंकारध्वनिः । कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यालंकारध्वनिः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारव्यङ्ग्यवस्तुध्वनिः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धालंकारव्यङ्ग्यालंकारध्वनिः । स्वतःसंभविवस्तुव्यङ्ग्यवस्तुध्वनिः, स्वतःसंभविवस्तुव्यङ्ग्यालंकारध्वनिः । स्वतः संभव्यलंकारव्यङ्ग्यवस्तुध्वनिः, स्वतः संभव्यलंकारव्यङ्ग्यालंकारध्वनिः । पदवाक्यप्रबन्धगतत्वेन च षट्त्रिंशद्विधः । उभयशक्त्युद्भवो ध्वनिः वाक्यमात्रगतत्वेनैकविध एवेति सर्वेषां संकलनया एकपञ्चाशद् भेदा भवन्ति इति भावः ।

( ५२ ) प्रश्नः—

'चन्दमऊएहिं णिसा णलिणी कमलेहिं कुसुमगुच्छेहिं लआ ।
हंसेहिं सरअसोहा कव्वकहा सज्जणेहिं करइ गरुई ॥'

**अत्र प्रतीयमानोपमा वाच्यं दीपकालंकारं पुष्णातीति ग्रन्थकृता समाधाय प्रतीयमानोपमाया वाच्याङ्गतया ध्वनित्वं निराकारि । प्रतीयमानोपमां दीपकालंकारः कथं न पुष्णाति ? इति उत्तरस्य हेतुयुक्तिर्विलिख्यताम् ।**

उत्तरम्—'चन्दमऊएहिं-' इति पद्येऽप्रस्तुतानां चन्द्रमयूखादीनां प्रस्तुतानां सज्जनानाञ्च कर्तृतया, एवमप्रस्तुतानां निशादीनां प्रस्तुतायाः काव्यकथायाश्च कर्मतया गुरुकरणैकधर्मसम्बन्धात् दीपकालंकारे वाच्यभूते चन्द्रकिरणादीनां सज्जनैः सह निशादीनां काव्यकथया च सार्धं सम्बन्धविशेषं विना तादृशवाच्यार्थप्रतीतिरसम्बद्धविषयैव स्यादिति यथा चन्द्रकिरणादिभिर्निशादिस्तथासज्जनैः काव्यकथा गुर्वी क्रियते इत्युपमानोपमेयभावस्य कल्पनया व्यङ्ग्यभूतोपमायाः वाच्यभूतदीपकोपस्कारकत्वेनाङ्गत्वात् दीपकालंकारो नैव प्रतीयमानोपमां पुष्णाति अपि तु दीपकमेव प्रतीयमानोपमा पुष्णाति, यतो हि वाच्यातिरिक्तालंकारस्य व्यङ्ग्यभूतस्य प्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्योपस्कारकत्वं व्यङ्ग्यार्थापेक्षयाऽप्रधानत्वं वा न भासते, असौ ध्वनेर्मार्गो न मतः किन्तु गुणीभूतव्यङ्ग्यस्यैव मार्ग इति भावः । नहि कथञ्चित् अलंकारव्यंजनमात्रेणैवालंकारध्वनिर्व्यपदेष्टुं शक्यः, अपि तु वाच्यापेक्षया व्यङ्ग्यार्थस्यातिकविच्छित्तिशालित्वेनैवेति तदभावे न ध्वनिव्यपदेशो भवति, अतएवोक्तपद्ये व्यङ्ग्योपमायाः प्रतीयमानत्वेऽपि तत्परत्वेन चारुत्वाव्यवस्थानात् नोपमाध्वनिव्यपदेशः, अपि तु वाच्यभूतदीपकालंकारस्यैव रमणीयतया व्यवहारो भवतीति हृदयम् ।

तदुक्तम्—'अलंकारान्तरस्यापि प्रतीतौ यत्र भासते । तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥' इति ।

( ५३ ) प्रश्नः—

अर्थान्तरन्यासध्वनिं व्यतिरेकध्वनिञ्च द्विविधमपि सविशेषमुदाहरत ।

उत्तरम्—अर्थान्तरन्यासध्वनिर्द्विविधः-शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यः, अर्थशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यश्च । तत्र प्रथमस्योदाहरणं—'देव्वा एत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो । कङ्किल्लपल्लवाः पल्लवाणं अण्णाणं ण सरिच्छा' ॥ अत्र तरुसस्यरूपं समर्थनीयं विशेषमर्थम्, अलौकिकपराक्रमशालिनोऽपि समृद्धिलक्षणं फलं दैवाधीनं कदाचिन्न सम्पद्येत, तत्र किं विधेयमस्माभिरिति सामान्यार्थः अभिधामूलव्यञ्जनया प्रतीयमानः समर्थयतीत्यभिधामूलार्थान्तरन्यासध्वनिः फलशब्दस्य परिवृत्त्यसहत्वाच्च शब्दशक्तिमूलत्वमस्य बोध्यम् । द्वितीयस्योदाहरणम्—हिअ अष्ठाविअ मण्णुं अवरुण्णमुहं हि मं पसाअन्त ! अवरुद्धस्स वि ण हु दे बहुजाण अरोसिउं सक्कम्म ।' अत्र कृतापराधस्यापि बहुज्ञस्य तवोपरि कोपः कर्तुं न पार्यते इति वाच्यविशेषं, 'सापराधानामपि बहुज्ञानामुपरि क्रोधः कर्तुमशक्यः' इति व्यञ्जनागम्यमर्थसामान्यं समर्थयतीति अर्थशक्तिमूलोऽर्थान्तरन्यासध्वनिः । बहुज्ञादिशब्दानां पर्यायपरिवृत्तिसहत्वाच्चास्यार्थशक्तिमूलत्वं बोध्यम् ।

व्यतिरेकध्वनिरपि द्विविधः—शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यः, अर्थशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यश्च । तत्र प्रथमस्योदाहरणम्—'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो, ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये । ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां—स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥' अत्रान्धकारविध्वंसनधर्मा गगनोद्भासनधर्माश्च किरणेष्वेव न तु पादेषु, तथा कमलशोभापोषणधर्माः किरणेष्वेव नतु पादेषु, तत्र तु कमलशोभाहरणधर्माः सन्ति । एवं गिरिशृङ्गोद्भासनधर्माः किरणेष्वेव न तु चरणेषु, तेषान्तु केवलं देवानां मस्तकारोहणमेवेति उपमेयभूतसूर्यकिरणानामुपमानभूतसूर्यचरणापेक्षया आधिक्यं व्यञ्जनया प्रतीयते इति शब्दशक्तिमूलो व्यतिरेकध्वनिः । पादादिशब्दानाञ्च पर्यायपरिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वं बोध्यम् । द्वितीयस्योदाहरणम्—'आएव्व वणुद्देसे खुज्जव्विअ पाअवो घडि अवत्तो । मा माणुसम्मि लोए ता एक्करसो दरिद्दो अ ॥' अत्र दानशीलस्य निर्धनजनस्य जन्मनिन्दा, पत्ररहितकुब्जवृक्षजन्म-

प्रशंसा च वाच्यभूता 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इत्यादिवत् तादृशपादप-पुरुषयोः उपमानोपमेयभावपूर्वकं तादृशपादपापेक्षया तादृशपुरुषस्य जन्मनो निकृष्टत्वेन शोच्यतायामाधिक्यं व्यञ्जनया प्रत्याययतीति अर्थशक्तिमूलो व्यतिरेकध्वनिः । पादपादिशब्दानां परिवर्तनेऽपि विवक्षितार्थबोधे क्षत्यभावेन पर्यायपरिवृत्तिसहत्वेनार्थशक्तिमूलत्वमस्य बोध्यम् ।

( ५४ ) प्रश्नः—

'शब्दार्थशक्त्या वाऽऽक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालंकृतिर्ध्वनेः ॥'

कारिकेयं स्पष्टं व्याख्यायताम् सोदाहरणम् ।

उत्तरम्—शब्दार्थशक्तिः-अभिधामूला स्वतन्त्रा च व्यञ्जना तयाऽऽक्षिप्तः-प्रत्यायितोऽपि व्यङ्ग्योऽर्थो यत्र काव्ये कविना पुनः स्वोक्त्या तद्वाक्यघटकपदान्तरेण आविष्क्रियते प्रकाश्यते सोऽस्मादनुस्वानोपमव्यङ्ग्यात् ध्वनेः अन्यः अलंकार एव नतु ध्वनिः । अर्थात् यत्र काव्ये बहुभिः पदैः व्यङ्ग्योऽर्थो व्यज्यते किन्तु एकेन केनापि पदेन पुनरत्र वाच्यभिन्नोऽप्यर्थोऽस्तीति स्पष्टं सूच्यते चेत् तर्हि न तत्र संलक्ष्यक्रमव्यङ्ग्यः, असंलक्ष्यक्रमव्यङ्ग्यो वा ध्वनिः, व्यङ्ग्यार्थस्य स्फुटीभावेनावरणरहितकामिनीकुचकलशवत् चमत्कृतिजनकत्वाभावात् । अपितु तत्र श्लेषाद्यलंकारव्यवहार एव भवतीति सारम् । तत्र शब्दशक्त्या व्यञ्जनीयस्य व्यङ्ग्यस्य पदान्तरेण प्रकाशनं यथा—'वत्से ! मा गा विषादं श्वसनमुरुजवम्—' इत्यादौ विषादादिशब्दैर्व्यज्यमानोऽपि शिवादिरूपो व्यङ्ग्यार्थः, छद्मशब्देन स्फुटं प्रकाशित इति न शब्दशक्त्युद्भवः संलक्ष्यक्रमव्यङ्ग्यो वस्तुध्वनिः, अपि तु गुणीभूतव्यङ्ग्यमेव । तथा अर्थशक्त्या व्यञ्जनीयस्य व्यङ्ग्यस्य पदान्तरेण प्रकाशनं यथा—'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातः—' इत्यादौ अम्बावार्धक्यादिभिरर्थैः समागमसौकर्यमुखेन संभोगेच्छायाः व्यज्यमानत्वेऽपि तस्या व्याजशब्देनैव स्फुटीकृतत्वात् नार्थशक्त्युद्भवो ध्वनिः । उभयशक्त्या व्यञ्जनीयस्य व्यङ्ग्यस्य पदान्तरेण प्रकाशनं यथा—'दृष्ट्या केशव ! गोपरागहृतया—' इत्यादौ कामान्धतया किञ्चिन्मया न विचारितमित्यादि व्यङ्ग्यार्थस्य लेशशब्देनैव स्फुटीकृतत्वात् नोभयशक्तिमूलो ध्वनिरिति भावः । अत्र गोपरागादिशब्दानां परिवर्तनाक्षमत्वेन दृष्टमित्यादिशब्दानाञ्च परिवर्तनक्षमतया चोभयशक्तिमूलत्वेनास्य ध्वनेः संभावना बोध्या । सा च लेशशब्देन निराकृता ।

एवं 'वत्से मा गा विषादमि'त्यादिश्लोकेऽपि विषादादिशब्दानां परिवर्तने च विवक्षितार्थालाभेन परिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वसंभावना छद्मशब्देन निराकृतेति तत्त्वम् । 'अम्बा शेतेऽत्र वृद्धा' इत्यादौ तु अम्बादिशब्दानां पर्यायपरिवर्तनेऽपि विवक्षितार्थबोधे बाधाभावेनार्थशक्त्युद्भवत्वस्य संभावना विज्ञेया । सा च व्याजशब्देनैवापाकृता ।

( ५५ ) प्रश्नः—

अलंकारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥

कारिकामिमां व्याख्याय कश्च ध्वनेर्मार्ग इत्युपपाद्यताम् ?

उत्तरम्—अलंकारान्तरस्यापीति । यत्र काव्ये अलंकारान्तरस्य वाच्यव्यतिरिक्तालंकारस्य व्यङ्ग्यभूतस्य प्रतीतौ सत्यामपि वाच्यस्यार्थस्य तत्परत्वं व्यङ्ग्योपकारकत्वं व्यङ्ग्यार्थापेक्षयाऽप्रधानत्वं न भासते, असौ अनुरणनसदृशसंलक्ष्यक्रमव्यङ्ग्यध्वनेः मार्गो न मतः, किन्तु गुणीभूतव्यङ्ग्यस्यैवेत्यर्थः । यथा 'चन्द्रमयूखैर्निशा—' इत्यादौ दीपकादावलंकारे उपमाया गम्यत्वेऽपि तत्परत्वेन ( उपमारूपव्यङ्ग्यार्थपरत्वेन ) चारुत्वाव्यवस्थानात् न ध्वनिव्यपदेशः । अपि तु—'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् । रसादिपरता यत्र स ध्वनेर्मार्ग इष्यते ॥' इति रीत्या यत्र काव्ये नानारूपाणां शब्दार्थ–तदुभयालंकारादीनां प्रधानीभूतरसादिव्यङ्ग्यार्थोपस्कारकत्वं भवति स ध्वनेर्मार्ग इति भावः । अर्थात् रस–भाव–तदाभास–तत्प्रशमादिलक्षणं मुख्यं व्यङ्ग्यार्थमनुवर्तमाना यत्र शब्दार्थालंकारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थिताः, तत्र काव्ये ध्वनिरिति व्यपदेशो भवति ।

एतेन 'अलंकारान्तरस्यापि प्रतीतौ यत्र भासते । तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥' इयं कारिका सोदाहरणप्रदर्शनं व्याख्याताम् इत्यादयः प्रश्ना अपि समाहिता भवन्ति ।

( ५६ ) प्रश्नः—

'यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥'

अस्याः कारिकाया अंशद्वयोदाहरणप्रदर्शनपूर्वकं व्याख्यानं विधीयताम् ।

उत्तरम्—यस्मिन् काव्ये प्रतीयमानो व्यङ्ग्यार्थः प्रक्लिष्टत्वेन अत्यन्तगूढतया प्रतीतौ वाच्यार्थस्याङ्गत्वेनोपकारकत्वेनापि वा भासते असौ काव्यविशेषोऽस्य

संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्न गोचरो न विषयः, किन्तु गुणीभूतव्यङ्ग्यत्वेनैव व्यपदेश्यः, अर्थात् व्यङ्ग्यार्थस्य स्फुटतायां लोकोत्तरसहृदयहृदयाह्लादजनकतया प्रधानतायाञ्च ध्वनिः, अन्यथा तु गुणीभूतव्यङ्ग्यमेवेति सारम् । एवञ्च द्विविधोऽपि प्रतीयमानोऽस्फुटः स्फुटश्च । तत्र य एव स्फुटः शब्दशक्त्याऽर्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः । स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूपसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरविषयः । अस्फुटव्यङ्ग्यस्त्वनतिचमत्करणात्, स्फुटव्यङ्ग्योऽपि वाच्याङ्गभूतव्यङ्ग्यो व्यङ्ग्याप्राधान्यात् न ध्वनेर्विषयः, किन्तु स्फुटव्यङ्ग्यप्रधान एवेति भावः । तत्र व्यङ्ग्यस्य गूढताया उदाहरणम्—'अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता । नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥' इति । तथा वा—'सन्धौ सर्वस्वहरणं विग्रहे प्राणसंशयः । अलावुद्दीननृपतौ न सन्धिर्न च विग्रहः ॥' इति । वाच्याङ्गभूतव्यङ्ग्यस्योदाहरणम्—'कमलाकरा न मलिताः, हंसा उड्डायिता न च पितृष्वसः ! । केनाऽपि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम् ॥' इति । अत्र मुग्धाकर्तृकं जलधरप्रतिबिम्बदर्शनरूपं व्यङ्ग्यमपि सहृदयाह्लादकवाच्यस्याङ्गभूतमिति न ध्वनेर्विषय इति भावः ।

( ५७ ) प्रश्नः—

'वाणीरकुडङ्गोड्डीण-सउणि-कोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं ॥'
'उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुह्ने ।
अह दे विसमविरावो ससुरेण सुओ वलअसद्दो ॥'

अनयोः पद्ययोः विवक्षितविषयं प्रतिपाद्य व्यङ्ग्यवैशिष्ट्यं वर्तते न वेति प्रतिपादनीयम् ।

उत्तरम्—'वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि' इति पद्यस्यायमभिप्रायः—वेतसलतामण्डपात् उड्डीनानां शकुनीनामुड्डयनेन कलकलशब्दमाकर्णयन्त्याः गृहकर्मसु संलग्नाया वध्वाः सर्वाङ्गानि सीदन्ति आकुलीभवन्तीत्यर्थः । अत्र रतिसंभोगार्थं कृतसङ्केतः कामुकपुरुषो लताकुञ्जं प्रविष्ट' इति व्यङ्ग्यापेक्षया उड्डीनशकुनिशब्दश्रवणमात्रेणैवावश्यकगृहकार्ये संलग्ना अपि सकलाङ्गावसादलक्षणातिशयमदनसंचारजनितरतिवासनापीडाभिः व्याकुलीभूता सती स्वात्मानमपि धर्तुं न पारितवती, अर्थात् निजगाम्भीर्यावहित्थावशेनाङ्गविकार-

मपि संवरीतुं न पारितं तया, का कथा गृहकार्यसम्पादनस्य, एतावता सातिशयमदनपरवशताप्रतीतेरेतादृशवाच्यार्थस्यैव परमरमणीयतया उक्तव्यङ्ग्यस्याचारुतयाऽसुन्दरव्यङ्ग्यत्वेन अस्य गुणीभूतव्यङ्ग्यत्वं बोध्यम् । लोचने तु अस्य वाच्यसिद्ध्यङ्गव्यङ्ग्यत्वेन गुणीभूतव्यङ्ग्यत्वमुक्तम् ।

एवं 'उच्चिनु पतितानि कुसुमानि मा धुनीः शेफालिकां हालिकस्नुषे ! । एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः' इति पद्येऽविनीतकामुकेन सह यथेच्छं रममाणां नायिकां प्रति तत्सख्या बहिरेव वलयध्वनिं श्रुत्वा प्रतिबोधनम् , हे हलवाहपुत्रवधु ! वृक्षाद् भूतले स्वयमेव पतितानि शेफालिकापुष्पाणि संचिनु, किन्तु पुष्पाणि पातयितुं शेफालिकाशाखां न कम्पय, मयाऽपि श्रावणप्रत्यक्षविषयीक्रियमाणोऽत्युत्कटो वलयशब्दस्तव श्वशुरेण श्रुतः इति भावः । अत्र उद्धतेन केनाऽपि कामुकेन सह स्वैरं रममाणाया नायिकायाः कङ्कणशिञ्जितादिशब्दमुच्चैः बहिरेव श्रुत्वा रहस्यभङ्गभीरुवचनरचनचतुरा सहचरी तां तथा प्रतिबोधयति यथा सा तादृशानुचितकार्यतो निवर्तेत, रहस्यभङ्गश्चापि न भवेत्' इति व्यज्यमानप्रकरणेन 'तव श्वशुरस्य शेफालिकातरौ महान् स्नेहः' इति तन्निम्नीकरणधूननादिभिर्भृशमसौ क्रुध्येत् तस्मादेवं न विधेयम्' इति प्रतीयमानं समर्थनं यद्यपि प्रथमं तादृशवाच्यार्थमेव पोषयतीति व्यङ्ग्यस्य पूर्वं वाच्याङ्गत्वमेव प्रतिभाति, तथापि पश्चात् शेफालिकाकम्पनस्याप्राकरणिकत्वात् तत्कथनस्य शेफालिकाकम्पननिषेधतात्पर्यकत्वाभावेन नायिकारहस्यगोपनतात्पर्यकत्वस्य निश्चयात् निषेधरूपवाच्यार्थस्यैव तादृशौद्धत्यपूर्णरतिक्रीडानिषेधरूपप्रधानव्यङ्ग्यार्थपोषकत्वमिति पर्यन्ते संलक्ष्यक्रमव्यङ्ग्यध्वनेरेव विषयता निश्चीयते ।

( ५८ ) प्रश्नः—

'शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।
तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥'

इमां कारिकां ससन्दर्भं व्याख्याय 'ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह प्रकरणाद् व्यङ्ग्यत्वेनेत्यवगन्तव्यम्' । इति विवृतिग्रन्थस्य तात्पर्यमुपवर्ण्यताम् ।

उत्तरम्—अलङ्कारध्वनेर्निरूपणस्य प्रयोजनवत्ताख्यापनद्वाराऽऽवश्यकतां प्रतिपादयति—शरीरीकरणं येषामित्यादि । अयमाशयः—येषामलङ्काराणां वाच्यतादशायां शरीरीकरणमपि न व्यवस्थितम्, वलयकेयूरादिभूषणस्थानापन्नत्वेनाशरीरतया

शरीरत्वधर्मासादनमपि न संभावितम्, त एवालङ्काराः, ध्वनेः काव्यस्य : ध्वननव्यापारस्य वाऽङ्गतां व्यङ्ग्यतां प्राप्ताः सन्तः परामुत्कृष्टां छायां शोभाश्रयकाव्यात्मतां प्राप्नुवन्ति। अर्थात् वाच्यभूतानामपि अलङ्काराणां ध्वन्यमानतादशायां सहृदयानां लोकोत्तरचमत्कारजनकतया विच्छित्तिविशेषाधायकत्वमनुभवसिद्धमिति न व्यर्थोऽलंकारध्वन्युपदेशः।

ननु पूर्वकारिकायामलङ्काराणां ध्वनेरङ्गत्वमुक्तं, तच्च वाच्यत्वेन व्यञ्जकत्वाद् उपकारकतयैव संभवतीति कथं तेषां वाच्यभूतालङ्काराणां शोभातिशयजनकत्वसंभव इत्याशङ्कापाकरणायाह—'ध्वन्यङ्गता चोभाभ्यामि'त्यादि। अयं भावः ध्वनेरङ्गत्वं द्विधा संभावितं तदुपकारकत्वरूपं, तदात्मरूपत्वञ्च, तत्र वाच्यभूतालङ्काराणां व्यञ्जकतया ध्वनेरुपकारकत्वरूपमङ्गत्वं बोध्यम्, व्यङ्ग्यानान्तु तेषां स्वयमलंकार्यतया तदात्मतयैव ध्वनेरङ्गत्वं संभवतीति प्रकृते व्यङ्ग्यभूतानामलंकाराणां ध्वन्यात्मतयैव प्रकरणेन ध्वन्यङ्गत्वमवधारितमिति न शोभाऽपकर्षेणालंकारध्वन्युपदेशवैयर्थ्यमिति भावः। इदमिह तत्त्वमलंकाराणां ध्वनित्वेऽपि न वास्तविकं काव्यात्मत्वं संभवति, 'काव्यस्यात्मा स एवार्थः' इत्यनेन व्यङ्ग्यरसादीनामेव काव्यात्मत्वव्यवस्थापितत्वात्, किन्तु यथा बालक्रीडायां कस्मिंश्चिद् शिशौ काल्पनिकमप्यारोपितं राजत्वमन्यापेक्षया किञ्चिन्महत्त्वमादधाति, तथैव ध्वनिभूतेऽलंकारे आरोपितमपि काव्यात्मत्वं वाच्यभूतालंकारापेक्षयोत्कर्षमावहत्येव, वाच्यालंकाराणान्तु कटककुण्डलादिवत् शरीररूपत्वमपि यदा दुर्घटं तथा का कथा काव्यात्मत्वसंभावनाया इति भावः।

( ५९ ) प्रश्नः—

ध्वनिभूते शृङ्गारे केषां गुणानामुपादेयत्वं केषाञ्च दोषाणां त्याज्यत्वमिति सप्रमाणं प्रतिपाद्य निम्नकारिका सोदाहरणा व्याख्येया—

'अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः'॥

उत्तरम्—'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥' इति प्रामाण्येन यतो विप्रलम्भशृङ्गारे करुणे च मनोऽधिकमार्द्रतां द्रुतिं चित्तस्य निर्गलितत्त्वरूपां द्वेषादिजन्यकाठिन्यशून्यतामिति यावत् प्राप्नोति तस्मात् तत्र 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्' इति लक्षणलक्षितं माधुर्यमेव प्रकर्षवत् विच्छित्तिविशेषकृदभिमतमिति भावः। तदुक्तं—'शृङ्गार एव

मधुरः परः प्रह्लादनो रसः । तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति' ॥ इति । 'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः । ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः' ॥ इति प्रामाण्येन श्रुतिदुष्टत्वप्रभृतयो येऽनित्या दोषाः प्रतिपादिताः, ते ध्वन्यात्मनि प्राधान्येन व्यङ्ग्यभूते शृङ्गारे रसे एव न तु रौद्रादौ परित्याज्याः इत्यभियुक्तैः प्रतिपादितम् ।

'अव्युत्पत्तेरशक्तेर्वा' इत्यस्यायमभिप्रायः—अव्युत्पत्तेर्व्युत्पत्तिराहित्यात् अनुप्रासयमकादिनिबन्धनैकरसिकत्वादिति यावत्, वाऽथवा अशक्तेः वृत्तस्य युक्तियुक्तार्थकशब्दपरिपूरणसामर्थ्यविरहात् हेतोः—स्खलद्गतेः बाधितार्थस्य लक्षणावृत्तिमात्रप्रयोज्यबोधजनकस्येति भावः, शब्दस्य यो निबन्धः, यः प्रयोगः सः अविवक्षितवाच्यस्य ध्वनेर्विषयो न विज्ञेय इति भावः । तत्राव्युत्पत्तिकृतानुप्रासप्रवणकेवलाक्षणिकशब्दप्रयोगो यथा—प्रेङ्खत्प्रेमप्रबन्धप्रचुरपरिचयप्रौढसीमन्तिनीनां, चित्ताकाशावकाशे विहरति सततं यः स सौभाग्यभूमिः ।' इत्यत्र 'प्रेङ्खत्' इति लाक्षणिकः प्रयोगः, 'चित्तमाकाशः' इति गौणः शब्दप्रयोगः । वृत्तपूरणमात्रप्रयोजनो यथा—'विषमकाण्डकुटुम्बकसञ्चयप्रवर ! वारिनिधौ पतता त्वया । जलतरङ्गविघूर्णितभाजने विचलितात्मनि कुब्जमये कृता ॥' इत्यत्र प्रथमश्चरणश्चन्द्रे उपचरितो वृत्तपूरणमात्रप्रयोजन इति शम् ।

इति दरभङ्गामण्डलान्तर्गत'अतिहर'ग्रामवासिव्याकरण–न्यायाद्यनेकशास्त्राचार्य-
दरभङ्गाराजकीय-धौत-शाल-प्रतिष्ठ-प्राप्तस्वर्णपदकगयामण्डलान्तर्गत'भोरी'-
स्थसाङ्गदर्शनविद्यालयाध्यापकपण्डितश्रीशोभितमिश्रविरचितं
प्रथमद्वितीयोद्द्योतात्मकं ध्वन्यालोकरहस्यं समाप्तम्

D... मुद्रक—विद्याविलास प्रेस, बनारस, १९५४

# तृतीय उद्द्योतः

(६०) प्रश्नः—अविवक्षितवाच्यध्वनेरत्यन्ततिरस्कृतवाच्य—अर्थान्तरसंक्रमितवाच्ययोः पदप्रकाश्ययोर्व्यङ्ग्यार्थप्रदर्शनपूर्वकमुदाहरणे प्रतिपाद्य ।

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' ॥

इति पद्यं कस्यध्वनेरुदाहरणमिति विशदं विवेचयत ।

**उत्तरम्**—'धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा । मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः' । इति अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्यध्वनेः पदप्रकाशताया उदाहरणं बोध्यम् । धैर्यादिमित्रानभिद्रोहान्ताः सप्त सम्पल्लक्ष्म्याः समिध उद्दीपकाः भवन्तीति भावः । अत्र शुष्ककाष्ठानि वह्निमिव धैर्यादीनि सम्पदं दीपयन्तीति उपमायाः पर्यन्ते पर्यवसानेऽपि पूर्वं धृत्यादिभिः सह समिद्रूपतादात्म्यस्य बाधितत्वेन 'आयुर्घृत'मित्यत्र घृतशब्दवत् समिच्छब्दः उद्दीपकत्वं लक्षयन् अन्यविलक्षणतया तत्करत्वं व्यनक्ति ।

तथा चेन्धनरूपवाच्यस्यसर्वथाऽविवक्षया व्यञ्जने च समिदतिरिक्तपदानपेक्षया एकस्मादेव समित्पदात् तादृशव्यङ्ग्यार्थप्रतीतेः स्पष्टमेव पदप्रकाश्योऽयमत्यन्ततिरस्कृतवाच्यध्वनिरिति हृदयम् ।

'प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा, सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैश्शिरः । व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा, रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' ॥ इत्यर्थान्तरसंक्रमितवाच्यध्वनेः पदप्रकाशताया उदाहरणं ज्ञेयम् । रावणापहृतां सीतां मनसा सम्बोध्य ऋष्यमूकस्थस्य रामचन्द्रस्योक्तिरियम् । हे प्रिये ! रावणकृतासह्ययातनां सोढ्वा कुलमर्यादां रक्षन्त्या त्वया सत्कुलोत्पत्तेराचारः स्थापितः । मया तु तादृशत्वद्व्यापदस्तूष्णीमवेक्षकेण तत्प्रतीकारं कर्तुमपारयता स्वजीवनरक्षणार्थं युद्धाद्बिभ्यता साहसैकरसिकेनापि कातरेण स्वार्थान्धेन रामेण त्वत्प्रेम्ण औचित्यमपि न कृतम्, न हि प्रियजनपरिभवः

प्रतापिना वीरेण कथमपि तूष्णीं सोढुं शक्य इति भावः। अत्र प्रिये इति सम्बोधनपदप्रवृत्तिनिमित्तस्य प्रणयस्यानौचित्येन कलङ्कितत्वात् शोकालम्बनोद्दीपनविभावयोः सम्पर्कात् रामस्य करुणो रसः स्फुटतीति लोचनोन्मीलितारः। एवञ्च रामस्य स्वयं दशरथापत्यमात्ररूपस्वार्थोपस्थापकत्वनामोच्चारणासङ्गतेरतिसाहसशालित्वपराक्रमातिशयादिसमानाधिकरणकातरत्वादिव्यङ्ग्यार्थविशिष्टदशरथापत्यरूपस्वार्थः केवलं रामपदेन व्यज्यते इति स्फुटमेवार्थान्तरसंक्रमितवाच्यध्वनेः पदप्रकाशतेति।

'या निशा सर्वभूतानाम्'। पद्यमिदमविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्यध्वनेर्वाक्यप्रकाशताया उदाहरणं बोध्यम्। तथाहि—श्रीकृष्णोऽर्जुनमुपदिशति–हे पार्थ! समेषां प्राणिनां या निशा मोहजनकतया रात्रिसदृशी मिथ्यादृष्टिः, सकलसांसारिकपदार्थतिरोधायकतया तात्त्विकदृष्टिरेव वाऽस्ति, तद्विषये संयमी योगी जनः कथमियं त्यज्येत, कथमियं प्राप्येतेति वाऽवबत्ते। यस्यां पुनर्मिथ्यादृष्टौ प्राणिनो जाग्रति अनुरज्यन्ति, सा मिथ्यादृष्टिः पश्यतस्तत्त्वमवदधतो योगिनो निशा अवधानविषयो न भवतीति भावः। मिथ्यादृष्टिस्त्याज्या तत्त्वदृष्टिश्च ग्राह्येति यावत्। एवञ्चात्र निशाजागरणपदाभ्यां क्रमशो रजनी–निद्राक्षयरूपवाच्यार्थयोः प्रकृतानुपयोगितया तदुपस्थितिमात्रे तात्पर्यानुपपत्तौ लक्षणया मिथ्यादृष्टितत्त्वदृष्ट्योर्बोधनद्वारा योगिजनकृते मिथ्याज्ञानविमुखत्व–तत्वज्ञानोन्मुखत्वे, मूढजनकृते च मिथ्याज्ञानोन्मुखत्व–तत्वज्ञानपराङ्मुखत्वे प्रत्याय्येते इत्यनेकपदसापेक्षतयाऽत्यन्ततिरस्कृतवाच्यध्वनेः स्फुटं वाक्यप्रकाशत्वमित्याकूतम्। अर्थात् मूढानामेव सांसारिकपदार्थे आस्था भवति, न तु ज्ञानिनाम्, 'अतोऽतात्त्विके जगति त्वयाऽऽस्था न विधेया' इत्युपदेश्यार्थोऽनेकपदसहकारेण लक्षणामूलव्यञ्जनया द्योत्यते इति भावः।

(६१) प्रश्नः—**'एमेअ जणो तिस्सा देइ कवोलोपमाइ ससिबिम्बं। परमत्थविआरे उण चन्दो चन्दो विअ वराओ'॥ 'विसमअओ विअ काणवि काणवि वोलेइ अमिअणिम्माओ। काणवि विसामिअमओ काणवि अविसामिअमअओ कालो॥' अनयोर्विवक्षितार्थप्रतिपाद्यशब्दशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यध्वन्योः पदवाक्यप्रकाश्ययोरुदाहरणे विवेचयत।**

**उत्तरम्**—'एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम्। परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः' इदं पद्यं पदप्रकाश्यार्थान्तरसंक्रमितवाच्यध्वने-

रुदाहरणं बोध्यम्। नायकः स्वप्रेयसीप्रशंसां करोति—लोको गतानुगतिकतयैव त्रैलोक्यसुन्दर्यास्तस्या मम प्रेयस्याः कपोलयोश्चन्द्रबिम्बेन साम्यं करोति, परमार्थ-विचारे तु क्षयित्वकलङ्कित्वादिशालित्वात् वराकश्चन्द्रो न कथमपि तदुपमायोग्यो भवितुमर्हतीति भावः। अत्र प्रथमचन्द्रपदेनैव चन्द्रमसोऽभिधानात् चरमं चन्द्रपदं क्षयशालित्वमलत्वसमानाधिकरणकलङ्कित्वादिविशिष्टं चन्द्रं प्रत्याययतीति द्वितीयचन्द्र-पदप्रकाश्योऽयमर्थान्तरसंक्रमितवाच्यध्वनिः। अन्यथा चन्द्रपदद्वयोपादानात् पौन-रुक्त्यापत्तिरापतेत्।

'विषमय इव केषामपि केषामप्यतियात्यमृतनिर्माणः। केषामपि विषामृतमयः केषामप्यविषामृतमयः कालः॥' इति पद्यं वाक्यप्रकाश्याविवक्षितवाच्यप्रभेदार्थान्तर-संक्रमितवाच्यध्वनेरुदाहरणं बोध्यम्। स्वपूर्वोपार्जितकर्मफलं दुर्विपाकरूपमनुभवन् निर्विण्णः कश्चिद् व्याहरति—पापात्मनां दुःखोपभोगेन, पुण्यशालिनां सुखोपभोगेन, पापपुण्योभयात्मनां तदुभयोपभोगेन, अज्ञानिनां तत्त्वज्ञानिनां वाऽनवधारितविशेषाणां दुःखसुखानुपभोगेन कालो व्यत्येतीति हृदयम्। अत्र हि 'विषं निम्बममृतं कपित्थ'-मितिवत् विषशब्दस्य दुःखसाधने, अमृतशब्दस्य च सुखसाधने निरूढलक्षणया दुःखसुखसाधनयोरभिधेयत्वव्यवहार इति वाच्ये तत्साधने प्रतीयमानयोः दुःखसुखयोः सम्बन्धेनैव प्रतीयेते इति वाक्यप्रकाश्यार्थान्तरसंक्रमितवाच्यध्वनित्वं ध्वनितम्।

'प्रातुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि। पथि प्रसन्नाम्बु-धरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम्॥' इति पदप्रकाश्यसंलक्ष्यक्रमव्यङ्ग्य-शब्दशक्त्युद्भवध्वनेरुदाहरणं ज्ञेयम्। अत्र विषण्णो वक्ता मूढार्थवाचकं 'जड' इति अयमेकवचनान्तं पदं स्वस्मिन् मूढत्वसूचनाय प्रायौक्षीदिति तत्रैवाभिधाया नियन्त्रि-तत्वेन पश्चात् कूपान्वयिनं शिशिररूपमर्थमभिधामूलव्यञ्जनया प्रत्याययतीति जड-शब्दस्य परिवृत्त्यसहत्वेन चास्य शब्दशक्तिमूलपदगतध्वनित्वमवसेयम्। शब्दश-क्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यवाक्यप्रकाश्यध्वनेः—'वृत्तेऽस्मिन् महाप्रलये धरणीधारणा-याधुना त्वं शेषः' इति हर्षचरितीयसिंहनादवाक्येषूदाहरणं बोध्यम्। तथा हि—सिंह-नादनामा हर्षनृपतिसेनापतिर्हर्षं ब्रवीति—अस्मिन् प्रभाकरवर्धननामकस्य पितुः, राज्य-वर्धनाभिधस्य ज्येष्ठभ्रातुश्च निधनरूपे महति दारुणे प्रलये नाशे वृत्ते जाते सति राज्यभारग्रहणाय अधुना त्वमेव शेषः, अवशिष्ट इति प्राकरणिकवाक्यार्थबोधे निष्पन्ने पश्चात् अभिधामूलव्यञ्जनया 'अस्मिन् महाप्रलये कल्पान्ते वृत्ते सति धरणीधारणाय

पृथिवीभारोद्वाहनाय त्वं शेषः—अनन्तनाग एव' इत्यर्थान्तरे ध्वनितेऽर्थद्वयस्य च परस्परमनन्वयवारणायोपमानोपमेयभावोऽपि व्यज्यते इति प्रलयशेषाद्यनेकपदसापेक्षतया शब्दपरिवृत्त्यसहतया चास्य ध्वनेर्वाक्यप्रकाश्यशब्दशक्त्युद्भवध्वनित्वं ज्ञेयम् ।

(६२) प्रश्नः—**कविप्रौढोक्तिसिद्धार्थशक्त्युद्भवध्वनेः पदवाक्यप्रकाशताया उदाहरणे व्यङ्ग्यार्थप्रदर्शनपुरस्सरं प्रतिपाद्य निम्नपद्ययोर्विवक्षितव्यङ्ग्यार्थवैशिष्ट्यं विशदयत–'वाणिअअ ! हत्थिदन्ता कुत्तो अम्हाण वाघकित्तीअ। जाव लुलिआलअमुही घरम्मि परिसक्कए सुह्वा ॥'**

**'सिहिपिच्छकण्णऊरा बहुआ वाहस्स गव्विरी भमइ ।**

**मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणम् ॥'**

**उत्तरम्**—'चूताङ्कुरावतंसं क्षणप्रसरमहाघनमधुतामोदम् । असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीसुखम् ॥' पद्यमिदं पदप्रकाश्यकविप्रौढोक्तिसिद्धार्थशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणं वर्तते । तथा हि—मधुमासलक्ष्म्या असमर्पितमपि मुखं कुसुमशरेण गृहीतमिति मुखविशेषणोपस्थापकमसमर्पितमिति नवोढावस्थाद्योतकं पदं मदनकर्तृकहठान्मुखग्रहणात्मकहठकामुकजनव्यवहारस्य कविप्रौढोक्तिसिद्धस्य सूचकम्, तच्च मदनोद्रेकोद्दीपकताया द्योतकमिति कविप्रौढोक्तिसिद्धार्थशक्त्युद्भवध्वनेः पदप्रकाश्यत्वं सिद्धम् । 'सज्जयति सुरभिमासो न तावदर्पयति युवति जनलक्ष्यसुखान् । अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान्' इति च वाक्यप्रकाश्यकविप्रौढोक्तिसिद्धार्थशक्त्युद्भवध्वनेरुदाहरणमवसेयम् । इहाचेतनो वसन्तः कामशरनिर्माता, कामश्च धनुर्धारीत्यादिरूपोऽर्थः कविकल्पनामात्रकल्पित इति कविप्रौढोक्तिसिद्धवसन्तकर्तृककामशरसज्जनतदर्पणाभावाद्यर्थः मन्मथोन्मादकतातिशयं व्यनक्तीति अनेकपदापेक्षतया वाक्यप्रकाशत्वमस्य बोध्यम् ।

'वाणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च । यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥' इति स्वतः सम्भव्यर्थशक्त्युद्भवपदप्रकाशध्वनेरुदाहरणमिदम् । तथा हि—चूर्णकुन्तलालङ्कृतवदनत्वेन परमरमणीयायाः स्नुषाया विभ्रमकुटिलकटाक्षनिरीक्षण–सुरतविलासाकृष्टचेताः सततं तदुपभोगक्षीणो मत्सुतस्तदन्तिकं विहाय मृगयार्थं क्षणमपि बहिर्गन्तुं नेच्छति इति कुतो मद्गृहे करिदन्तादीनां सम्भव इति एतादृशमर्थं स्वतः सम्भविना तादृशस्नुषासत्त्वादिरूपार्थेन व्यज्यमानं 'लुलितालकमुखी' इत्येतत्पदं प्रकाशयतीति ध्वनेरस्य पदप्रकाशत्वं सिद्धम् ।

'शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति। मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥' इति च पद्यं स्वतः सम्भवि-अर्थशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्य-वाक्यप्रकाश्यध्वनेरुदाहरणम्। अत्र सम्पूर्णवाक्येन नूतनपरिणीतायाः कस्याश्चिद्-व्याधवध्वाः क्षणमपि त्यागासहिष्णुतया सौभाग्यातिशयात्मको गुणप्रकर्षो व्यज्यते सपत्नीनां सम्भोगकाले वल्लभस्य हस्तिकुञ्जरहननसामर्थ्यप्रकाशनात् तास्वनासक्तिः तथा चानासक्त्या तासां दौर्भाग्यातिशयो ध्वन्यमानो नववध्वा गर्वोत्पादकः। इतरथा मौक्तिकालंकृतानां पुरः पिच्छभूषणाया गर्वानुपपत्तेः, इति सर्वमेतत् स्वतः सम्भव्यर्थबोधकं वाक्यमेव प्रकाशयतीति वाक्यप्रकाश्यत्वमस्य ध्वनेरव्याहतमिति भावः।

(६३) प्रश्नः-**ध्वनेः काव्यविशेषत्वेन काव्यस्य च शब्दसन्दर्भात्मकवाक्य-विशेषत्वात्कथं तस्य पदप्रकाशत्वमिति विविच्य समाधीयताम्।**

**उत्तरम्**—ननु ध्वनेः काव्यविशेषत्वात् काव्यविशेषश्च लोकोत्तरचमत्कारशालि-विशिष्टार्थप्रतिपत्तिजनकशब्दसन्दर्भात्मकवाक्यविशेष एवेति वाक्यादेव विलक्षणार्थ-बोधस्य जायमानतया पदानां स्मारकत्वेन वाचकत्वाभावात् ध्वनेः पदप्रकाशत्वं नोप-पद्यते, किञ्च न हि शब्दाच्छब्दान्तरस्य बोधः सम्भवतीति पद-ध्वनिकाव्ययोः शब्दस्वरूपयोः कथं परस्परं प्रकाश्यप्रकाशकभावो युज्यते, यदि पदप्रकाशत्वमुच्यते न तर्हि ध्वनिकाव्यत्वं, ध्वनिकाव्यत्वे वा न पदप्रकाशत्वमुभयोर्वैयधिकरण्यादिति चेदत्रोच्यते-स्यादेष दोषो यदि वाचकत्वं ध्वनिव्यवहारे प्रयोजकं भवेत्, नत्वेवं वर्तते, तस्य व्यञ्जकत्वेन व्यवस्थानात्। पदानां वाचकत्वाभावेन ध्वनेः पदप्रकाश-त्वाभावो नैव वक्तुं शक्यते, ध्वनौ अभिधारूपाया वाचकताया अनपेक्षणात्। 'व्यङ्ग्य-व्यञ्जनसम्बन्धनिबन्धनतया ध्वनेरित्युक्तेः केवलं व्यञ्जनाया एव तत्रापेक्षितत्वात्। अर्थात् ध्वनेः पदात्प्रकाशो नाम बोधः, स चाभिधाप्रयोज्यो यदि नापि सम्भवति, तथापि व्यञ्जनाप्रयोज्यः केन निवार्यते तावतापि पदप्रकाशत्वं ध्वनेरक्षुण्णमेव किञ्च ध्वन्यते इति ध्वनिरिति कर्मव्युत्पत्त्याऽतिशयचमत्कारशाली व्यङ्ग्यार्थोऽपि ध्वनि-पदार्थः, तस्य शब्दस्वरूपत्वाभावात् व्यञ्जकत्वरूपं तत्प्रकाशकत्वं पदानां सम्भवत्येवेति न कोऽपि दोषः पदमाश्रयतीति हृदयम्।

न चैवमपि एकस्मात् पदाद् व्यङ्ग्यप्रतीतेरदर्शनात् कथं पुनर्ध्वनेः पदप्रकाशता संघटते इति वाच्यम्? शरीरिणामिव काव्यानां संस्थानविशेषावच्छिन्नसमुदाय-

साध्याया अपि चारुत्वप्रतीतेरन्वयव्यतिरेकाभ्यां तत्तद्भागेषु कल्पनात् पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न कामपि क्षतिमावहतीति भावः।

तथा चायमत्र संग्रहः—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः। तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता। विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी। पदद्योत्येन सुकवेर्ध्वनिना भाति भारती।

(६४) प्रश्नः—**असंलक्ष्यक्रमव्यङ्ग्यरसादिध्वनेर्व्यञ्जकप्रकारान् प्रतिपाद्य तत्र वर्णानामनर्थकतया कथं रसादिव्यञ्जकत्वमिति सयुक्तिकं विवेचनीयम्।**

**उत्तरम्**—'यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु। वाक्ये संघटनायाञ्च स प्रबन्धेऽपि दीप्यते॥' इति कारिकानुसारमसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिर्वर्णपद-पदावयववाक्य-सङ्घटनाप्रबन्धगतत्वेन षड्विधो ज्ञेयः। ननु व्याकरणमहाभाष्यादौ वर्णानामनर्थकत्वोक्त्या कथं तेषां व्यङ्ग्यरसादिद्योतकत्वमिति चेदत्रोच्यते 'शषौ सरेफसंयोगौ ढकारश्चापि भूयसा। विरोधिनः स्युः शृङ्गारे, तेन वर्णा रसच्युतः॥ त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा। तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः॥' इति कारिकाद्वयानुसारं यदि वर्णानां व्यञ्जनाप्रयोज्यव्यङ्ग्यरसादिप्रतीतौ सहकारित्वं न स्यात्तर्हि शृङ्गारकरुणशान्तरसेषु द्योतनीयेषु कठोरवर्णसत्त्वे तेषां प्रतीत्यभावः, बीभत्सादौ तु कठोरवर्णसत्त्वे एव तत्प्रतीत्युत्कर्षो न स्यात्, तस्मात् कोमलवर्णैः साकं शृङ्गारादिप्रतीतेः, कठोरवर्णैः सह बीभत्सादिप्रतीतेश्चान्वयव्यतिरेकाभ्यामेव तत्र तेषां वर्णानां सहकारिताया निर्णयसम्भवात्। तथा च महाभाष्येऽपि अभिधाशक्ति-विरहमूलकमेव कतिपयानामेव वर्णानामनर्थकत्वमुक्तं न तु सर्वेषां वर्णानां, नापि व्यञ्जनाशक्तिमूलकमनर्थकत्वं तेषां कथमपि सम्भवतीति वर्णेष्वपि व्यञ्जनाया अक्षतत्वेन तेषामपि रसादिव्यञ्जकत्वं सम्भवत्येवेति भावः।

(६५) प्रश्नः—**असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यङ्ग्यार्थविवेचनपुरस्सरं पद-प्रकाशतामुदाहृत्य तस्यैव वाक्यप्रकाशताया उदाहरणयोः सविशेषं व्यङ्ग्यार्थं विवेचयत।**

**उत्तरम्**—'उत्कम्पिनी भयपरिस्खलितांशुकान्ता, ते लोचने प्रतिदिशं विधुरे क्षिपन्ती। क्रूरेण दारुणतया सहसैव दग्धा, धूमान्वितेन दहनेन न वीक्षितासि॥' इति पद्यं हि असंलक्ष्यक्रमव्यङ्ग्यकरुणरसध्वनेः पदप्रकाशस्योदाहरणं बोध्यम्।

लावाणके ग्रामे प्रेयस्या वासवदत्ताया दहनसम्भावनया वत्सराजोदयनस्य विलापोऽयम्—हे प्रिये ! कान्दिशीकतयाऽत्यन्तकातराक्षीमनाथां त्वां धूमान्धितनयनत्वादऽदृष्ट्वैव सहसा दहनोऽधाक्षीत्, अन्यथा तदवस्थां त्वां दृष्ट्वा वह्निः कथमपि दग्धुं न प्रवर्तेतेति भावः । अत्र हि वासवदत्तारूपेष्टवस्तुविनाशजन्योदयनवृत्तिशोकस्थायिभावभूत दुरत्युद्दीपनविभाव–तादृशविधुरनयनविक्षेपाद्युद्दीपनविभावकल्पादनुभाव तदनुमितभयादिसञ्चारिभावपरिपोषितस्य करुणरसस्य व्यञ्जने 'ते' इति पदं तत्तदनवृत्तिविलक्षणगुणगणस्मारणद्वारा सहकारितामञ्चतीति व्यक्तं प्रकृतरसस्य पदव्यङ्ग्यत्वमिति भावः ।

वाक्यव्यङ्ग्यश्चासंलक्ष्यक्रमरसादिध्वनिर्द्विविधः—शुद्धः, सङ्कीर्णश्च । तत्र शुद्धस्योदाहरणम्–'कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितैर्वनमपि गता यस्य प्रीत्या धृताऽपि तथाम्बया । नवजलधरश्यामाः पश्यन् दिशो भवतीं विना कठिनहृदयो जीवत्येव प्रिये ! स तव प्रियः ॥' इति विरहे वैदेहीमुद्दिश्य रामस्योक्तिरियम् । इह हि त्वया यत्कृते समेऽपि राज्यसम्पद्भोगविलासादयः परित्यक्ताः, स रामस्त्वद्विरहे दूयमानमानसो भूत्वा विनश्वरं क्षणिकजीवनमपि नात्याक्षीदिति धिक् तस्य कठोरत्वमविवेकित्वञ्चेति रामवचनात् सम्पूर्णवाक्यमेव सीताया रामस्यानुसरणादिभिः परिपुष्टं परस्परानुरागं प्रकाशयद् विप्रलम्भशृङ्गारं व्यनक्ति । अत्र कस्याप्यलङ्कारान्तरस्य साङ्कर्याभावेन शुद्धत्वमस्य बोध्यम् । अलङ्कारान्तरसङ्कीर्णो यथा—'समरनवनदीपूरेणोढाः पुनर्गुरुसेतुभिर्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः । तदपि निखिलप्रख्यैरङ्गैः परस्परमुन्मुखा–नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥' इति रूपकालङ्कारेणोपस्कृतस्य विप्रलम्भस्य पारस्परिकदर्शनात् सम्भोगशृङ्गारस्य वा ध्वनेरुदाहरणम् । तथाहि–अयमाशयः–प्रेयांसः प्रेयस्यश्च गुरुजनसमक्षे लज्जादिपरवशतया सङ्गमसुखमनुभवितुमपारयन्तोऽपि परस्परमाकस्मिकनयनमिश्रणविनोदेनैव सुखमयं समयं यापयन्तीति भावः । अत्र मदने नवनदीपूरत्वस्य, गुरुजनेषु सेतुत्वस्य, लोचनेषु नलिनीनालत्वस्य, चारोपाद्विवक्षातत्परत्वेन नाङ्गित्वेन कदाचन' इत्यलङ्कारलक्षणानुगतेन रूपकेण विभावाद्यलङ्करणद्वारा प्रसाधितो विप्रलम्भः मिथो दर्शनलाभात् संभोगशृङ्गाररसो वा सकलवाक्येन व्यज्यते ।

(६६) **प्रश्नः—सङ्घटनायाः सविशेषं स्वरूपं प्रतिपाद्य तस्या गुणाभिन्नभिन्नत्वयोः कतरः पक्षः श्रेयानिति सविशदं विवेचयत ।**

**उत्तरम्**—'असमासा समासेन मध्यमेन च भूषिता। तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥' इति कारिकानुसारं समासरहिता वैदर्भीरूपा प्रथमा, अदीर्घसमासयुक्ता पाञ्चालीरूपा द्वितीया, दीर्घसमाससहिता गौडीरूपा तृतीया, इति त्रिप्रकारा सङ्घटनात्मिका रीतिः क्रमशः उपनागरिका, कोमला, परुषा च वृत्तिर्वा कथितेति भावः। अथ तस्याः सङ्घटनाया गुणानतिरिक्तत्वं तदतिरिक्तत्वं वा? अतिरिक्तत्वपक्षेऽपि गुणाश्रया संघटना सङ्घटनाश्रया वा गुणा इति विकल्पत्रयेऽत्रोच्यते—गुणानां सङ्घटनानतिरिक्तत्वपक्षे सङ्घटनावृत्तित्वपक्षे वा सङ्घटनाया इव गुणानामप्यनियतविषयत्वापत्तिः स्यात्, अर्थात् व्यङ्ग्यभूतेऽस्मिन् रसे इयमेव सङ्घटना भवेदिति यथा सङ्घटनाया विषयनियमो नास्ति तथैव गुणानामपि सङ्घटनारूपत्वे सङ्घटनानिष्ठत्वे वा विषयनियमो न स्यादिति भावः। न चेयमापत्तिरिष्टापत्त्या परिहर्तुं शक्या, गुणानां विषयनियमस्य व्यवस्थितत्वेन तदुच्छेदस्य कर्तुमशक्यत्वात्, तथाहि 'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। माधुर्यमित्याद्युक्त्या करुणविप्रलम्भशृङ्गारयोर्माधुर्यप्रकर्षस्य, रौद्राद्भुतवीरबीभत्सेषु ओजसः, रसभावादिषु माधुर्यप्रसादयोर्व्यवस्थितविषयतया गुणसङ्घटनातादात्म्यपक्षे भङ्गप्रसङ्गः। सङ्घटनायास्तु—'अनवरतनयनजललवनिपतत्परिमुषितपत्रलेखान्तम्—' इत्यत्रेर्ष्याविप्रलम्भशृङ्गारे व्यङ्ग्येऽपि दीर्घसमासरूपाया' दर्शनेनासमासरूपायाश्चादर्शनेन 'यो यः शस्त्रं बिभर्ति—' इत्यादौ च रौद्ररसेऽपि व्यङ्ग्ये दीर्घसमासाया अदर्शनेनान्वयव्यतिरेकव्यभिचारात् विषयव्यवस्थाया वक्तुमशक्यतया गुणानां सङ्घटनास्वरूपत्वस्य सङ्घटनावृत्तित्वस्य वा वक्तुमसम्भवात्। अपि तु रसाश्रिता एव गुणाः। तदुक्तम्—'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः। अङ्गाश्रितास्त्वलङ्कारा मन्तव्या कटकादिवत्॥' उपचारात्तु (व्यञ्जकतासम्बन्धेन) कथञ्चिच्छब्दवृत्तयोऽपि गुणा उच्यन्ते इति त्वन्यदेतत्। न हि तावतैव तेषां सङ्घटनात्मकत्वं तद्वृत्तित्वं वार्थत आपतितं कथमपि शङ्कनीयं रसादीनां वर्णपदव्यङ्ग्यत्वस्यापि सहृदयहृदयहारितया प्रसिद्धत्वेन तत्र सङ्घटनाविरहेऽपि व्यङ्ग्यरसादिवृत्तितया गुणानां सङ्घटनात्मकत्वस्य वक्तुमशक्यात्। किञ्च चक्षुरादीनामिव तेषां यथास्वं विषयनियमितस्य स्वरूपस्य न व्यभिचारः, अर्थात् यथा रूपप्रत्यक्षे चक्षुषो, रसप्रत्यक्षे रसनायाः, गन्धादिप्रत्यक्षे घ्राणादीनां पृथक्कारणत्वकल्पने व्यभिचारो न भवति तथैव माधुर्यस्य करुणशृङ्गारादिवृत्तित्वे, ओजसो रौद्रवीरादिवृत्तित्वे निर्णीते, माधुर्यव्यञ्जने करुणादिव्यञ्जककोमलशब्दानामोजोव्यञ्जने रौद्रादिव्यञ्जककठोरशब्दानां च कारणत्वे व्यभिचारो न दृश्यते 'अनवर-

तनयनजले-'त्यादौ स्वाभाविकं शब्दानां कोमलत्वम्, 'यो यः शस्त्रं बिभर्ति-' इत्यादौ च कठोरत्वमस्त्येव, केवलं समासस्य दीर्घत्वाल्पत्वाभ्यां सङ्घटनैव विपर्यस्तेति सङ्घटनाया व्यञ्जकत्वे एव व्यभिचारः, न तु गुणाश्रयशब्दानां तस्मादन्ये गुणाः, अन्या च सङ्घटना, न वा सङ्घटनामाश्रिता गुणा इति सिद्धान्तः।

(३७) प्रश्नः-**सङ्घटनाया गुणस्वरूपत्वपक्षे प्राप्तामनुपपत्तिं परिहृत्य कविप्रतिभाया माहात्म्यञ्च ग्रन्थानुसारं विशदीकृत्य तस्या गुणाभिन्नत्वभिन्नत्वादिसकलपक्षसाधारणं नियामकहेतून् विवेचयत।**

**उत्तरम्**—यद्यपि शब्देषु सङ्घटनाया अवयवावयविभावेन, गुणानाञ्च व्यङ्ग्यव्यञ्जकभावेन वृत्तित्वमिति तदभेदपक्षो दुरुपपाद एव, तथापि सङ्घटना-गुणानामपि तादात्म्यं कथञ्चिदुपपादनीयम्। न च सङ्घटनाया गुणस्वरूपत्वे सङ्घटनावत् गुणानामपि अनियतविषयत्वं प्राप्नोति 'अनवरत...' 'यो यः शस्त्रम्...' इत्यादौ पूर्वोक्तरीत्या सङ्घटनाया अन्वयव्यतिरेकव्यभिचारदर्शनेन तदभिन्नगुणानामपि तादृशव्यभिचारस्य दुर्वारत्वादिति वाच्यम्? 'न ह्येकमुदाहरणं योगारम्भं प्रयोजयतीति' भाष्योक्तिरीत्या क्वचिदेकमात्रविपरीतलक्ष्यनिरीक्षणेन लक्षणात्मकनियमव्यभिचरणस्यान्याय्यत्वात्। अर्थात् नियमानुसारं तल्लक्ष्यमेवान्यथाकरणीयमिति 'अनवरत...' इति माधुर्यगुणाश्रयशृङ्गारलक्ष्यं समासरहितत्वेन 'यो यः शस्त्रम्...' इति ओजोगुणाश्रयरौद्रलक्ष्यञ्च समासभूयिष्ठतया परिवर्तनीयमिति हृदयम्। न च तल्लक्ष्ये यदि किञ्चिदप्यचारुत्वमस्ति, तर्हि कथं न तत् सहृदयहृदयवेद्यं भवतीति वाच्यम्? सहृदयानां विलक्षणकविप्रतिभाप्रभावितान्तःकरणतया आवरणभङ्गावच्छिन्न-रत्याद्यवच्छिन्न-चिदानन्दचमत्कारनिमग्नमानसतया च तादृशस्खलनप्रयोज्याचारुत्वस्य भानाभावात्। तथाहि-द्विविधो हि दोषः कवेः, अव्युत्पत्तिकृतोऽशक्तिकृतश्च। तत्राव्युत्पत्तिकृतो दोषः शक्तितिरोहितत्वात् कदाचिन्नापि लक्ष्यते, यस्त्वशक्तिकृतो दोषः स झटित्येव प्रतीयते। इदमत्र तत्वं लोकोत्तरकवित्वबीजभूता प्राक्तनपुण्यसम्भारजन्यविलक्षणसंस्कारात्मिका प्रतिभैव शक्तिः। तदुक्तं—**'नवनवोन्मेषशालिनी बुद्धिः प्रतिभा'**। तदुपयोगिसकलपदार्थपरामर्शकौशलं नैपुण्यरूपा च व्युत्पत्तिः। कवेस्तयोरभावश्च दोषप्रयोजकः। तत्र प्रतिभामात्रशालिकविकल्पिते काव्ये समस्तवस्तुवृत्तान्तनैपुण्याभावप्रयोज्यं क्वचन किञ्चन स्खलनमपि तदीयप्रतिभोद्रेकोन्मीलितवस्तुवृत्तवर्णनावैचित्र्यभावनया समाहितचेताः सचेताः कदाचिन्नाप्यव-

दधाति । किन्तु केवलव्युत्पत्तिशालिसकलगुणमालिकविकल्पिते काव्ये यथौचित्यं वर्णितेऽपि वस्तुजाते प्रतिभाविरहात् तस्य शब्दार्थयोरेवोत्कटं स्खलनं झटित्येवानायासवेद्यं भवतीति । तदुक्तम्–'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । यस्त्वशक्तिकृतस्तस्य स झटित्येव भासते' ॥ इति । अत एव महाकवीनामपि कालिदासादीनामुत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनावनौचित्यस्य 'अनौचित्यादृते नान्यद् रसभङ्गस्य कारण'मित्यादि रीत्या दोषदर्शनेऽपि लोकोत्तरप्रतिभातिरोहिततया ग्राम्यत्वेन प्रतिभानं न भवति । यथा कुमारसम्भवे देवीसम्भोगवर्णनस्य मातापित्रोः सम्भोगवर्णनस्येवानुचितत्वेऽपि सहृदयानां वैरस्यं न जायते कविप्रतिभैव तत्र कारणम् । 'अनवरत'–इत्यादौ तु अप्रतिभकविनिबद्धसमासबहुलशब्दैर्व्यज्यमानोऽपि शृङ्गारः सहृदयेभ्यो न रोचते इत्यन्वयव्यतिरेकाभ्यां कविप्रतिभायाः प्रभावो न मतिमतां तिरोहितः । परन्तु 'यो यः शस्त्रम्'...' इत्यादेरलक्ष्यत्वसम्पादनाय कविप्रतिभातिरोहितत्वात् सहृदयैरप्रतीयमानोऽपि विच्छित्तिविरहो हठात् कल्पनीयः स्यादिति महती अनुपपत्तिरिति नायं गुणसङ्घटनातादात्म्यपक्षः समीचीनः प्रतिभाति । किन्तु सकलपक्षसाधारणः सङ्घटनाया नियामकहेतुस्तु–'तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः' इति कारिकानुसारं रसभावविदः कविवक्तुः, ध्वन्यात्मरसाङ्गस्य रसाभासाङ्गस्य वा वाच्यस्य चौचित्यमेव सर्वथाऽऽश्रयणीयम् । किञ्च 'विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति । काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ॥' इति रीत्या तस्या मुक्तकादिविषयौचित्यमपि नियामकं तथा च यथा वक्तृवाच्ययोर्वैचित्र्यात् तदौचित्यं सङ्घटनां नियमयति, तथैव विषयस्यापि मुक्तकादिभेदेन वैचित्र्यात् तदौचित्यमपि तां नियमयतीति सारम् ।

इदं तु तत्त्वमिहावसेयम्—सङ्घटना गुणरूपा गुणवती गुणवृत्तिर्वा भवतु, कस्मिंश्चिदपि पक्षे न काप्यस्माकं क्षतिः तथाहि यदि सा सङ्घटना वक्तृवाच्यविषयौचित्यविहितविषयव्यवस्था सती नियता, तर्हि तस्या गुणरूपत्वे गुणाश्रयत्वे वाऽप्रधानत्वाभावान्नैवानियतविषयता । गुणनिष्ठत्वापक्षेऽपि वक्त्राद्यौचित्येनैव गुणानामपि विषयनियमनात् तदाश्रितायाः सङ्घटनाया अपि नियतविषयता सञ्जातैव । एवञ्च नियतविषयतया तस्याः प्रागुक्तं रसादिव्यञ्जकत्वमप्यव्याहतं भवति । अत एव पक्षत्रयमप्यत्र समीचीनमेव प्रतिभाति, तत्रापि समीचीनतमत्वं सङ्घटनाश्रयगुणपक्षस्यैव, व्यङ्ग्यव्यञ्जकभावेन गुणवती सङ्घटनेत्येवमविसंवादिप्रतीतेः सत्वात् । तदुक्तं लोचने–'गुणाः सङ्घटनैकरूपाः, तथापि गुणनियम एव सङ्घटनाया नियमः । गुणाधीनसङ्घ-

टनापक्षेऽप्येवम्। सङ्घटनाश्रयगुणपक्षेऽपि सङ्घटनाया नियामकत्वेन यद्वक्तृवाच्यौचित्यं हेतुत्वेनोक्तम्, तद्गुणानामपि नियमहेतुरिति पक्षत्रयेऽपि न कश्चिद् विप्लव इति तात्पर्यम्।'

(६८) प्रश्नः—**मुक्तकेषु द्वित्रोदाहरणद्वारा कवेः रसबन्धाभिनिवेशित्वं प्रतिपाद्य निम्नकारिके सोपष्टम्भं व्याख्येये—'एतद्यथोक्तमौचित्यमेव तस्या नियामकम्। सर्वत्र गद्यबन्धेऽपि च्छन्दो नियमवर्जिते॥' 'रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता। रचना, विषयापेक्षं तत्तु किञ्चिद्विभेदवत्॥'**

**उत्तरम्**—'अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः, क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः। हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः, कथय सुकृती कोऽयं मुग्धे! त्वयाऽद्य विलोक्यते' इति हि मुक्तकं कवेरमरुकस्य पूर्वरागाख्यविप्रलम्भश्रृङ्गाररसस्यन्दिसहृदयहृदयहारि च प्रसिद्धमेव। किं वा तस्यैव कवेः—'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो, निराहाराः सख्यः सततरुदितोच्छूननयनाः। परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने! मानमधुना॥' इति च मुक्तकमीर्ष्याख्यविप्रलम्भश्रृङ्गारव्यञ्जकं प्रसिद्धम्। 'एतद्यथोक्तमौचित्यमिति कारिकाया अयमाशयः—एतत् सम्प्रति पद्यकाव्यप्रस्तावे यथोक्तमुक्तमनतिक्रम्य, अर्थात् वक्तृ-वाच्य-प्रबन्धात्मकविषयाणमौचित्यमेव, न त्वन्यत् किञ्चिदपि, तुल्ययुक्त्या 'वृत्तबन्धोज्झितं गद्य'मिति लक्षणलक्षिते छन्दोनियमवर्जिते = छन्दोविहीने सर्वत्र गद्यकाव्येऽपि तस्याः सङ्घटनाया नियामकं बोध्यम्। विशेषानुक्तत्वात् तुल्यन्यायादुभयत्र सङ्घटनानियमहेतुस्तुल्य एवेति भावः। 'रसबन्धोक्तमौचित्यमिति कारिकायास्त्वयमभिप्रायः—सर्वत्र पद्य इव गद्येऽपि रसबन्धोक्तमौचित्यं प्रागुक्तप्रबन्धगतरसौचित्यं संश्रिता रचना सङ्घटना भाति, किन्तु तद्रसौचित्यं पुनः विषयापेक्षं प्रबन्धौचित्यानुरोधि सत्, किञ्चिद् ईषदेव विभेदवत् विभिन्नं न त्वत्यन्तं विलक्षणं भवतीति भावः। इदमत्र बोध्यम्—सर्वत्र सङ्घटनायां रसौचित्यमादरणीयम्। न ह्येतावता विषयौचित्यस्यावहेलना भवति, तदनुरोधेनापि तस्या आनुषङ्गिकयत्किञ्चिद्वैलक्षण्यदर्शनात्। परन्तु मुख्यं रसौचित्यमेवेति हृदयम्। तदुक्तं वृत्तौ—'अथवा पद्यवद् गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं सर्वत्र संश्रिता रचना भाति। तत्तु विषयापेक्षं किञ्चिद्विभेदवद् भवति। न तु सर्वाकारम्।' सर्वथाऽत्यन्तमिति यावत्। सर्वथा वैलक्षण्ये तुत स्यापि

मुख्यत्वमेव स्यादिति तात्पर्यम् । यदि हि प्रबन्धौचित्यमेव मुख्यं स्यात्तर्हि आख्यायिकायामपि करुणविप्रलम्भयोर्दीर्घसमासैव सङ्घटना शोभेत, न हि तथा वस्तुतः शोभते। तस्माद् रसौचित्यमेव श्रेय इति सारम् ।

(६९) प्रश्नः—**प्रबन्धात्मककाव्यस्य रसादिव्यञ्जनप्रकारान् सोपष्टम्भं प्रतिपाद्य तत्र भावौचित्यस्यावश्यकत्वं सम्यग् विवेचनीयम् ।**

**उत्तरम्**—इह हि प्रबन्धस्य रसव्यञ्जकत्वे रसोचितकथायाः स्थापनं प्रथमम्, तत्राप्यनुपयोग्यंशस्य परित्यागः, उपयोग्यंशस्य कल्पनञ्च द्वितीयम्, रसोपयोगिसन्धि-तदङ्गसन्निवेशनं तृतीयम्, उचितावसरे रसस्योद्दीपनप्रशमनयोजनं चतुर्थम्, प्रबन्धसमाप्तिपर्यन्तमङ्गिरसानुसन्धानं पञ्चमम्, अलंकाराणां रसोपयोगितया घटनं षष्ठं च निदानं बोध्यम् । तदुक्तम्—विभावभावानुभावसञ्चार्यौचित्यचारुणः । विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ इति वृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम्। उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ॥ सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया। न तु केवलया शास्त्र-स्थितिसम्पादनेच्छया ॥ उद्दीपनप्रशमने यथावसरमन्तरा । रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥ अलंकृतीनां शक्तावप्यानुरूप्येण योजनम् । प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ इति ॥ अयं भावः-विभावभावानुभावसंचारिणामौचित्ये प्रकृतरसानुकूल्येन चारुणः परमरमणीयस्य वृत्तस्य पुराणादिप्रसिद्धस्य, उत्प्रेक्षितस्य स्वयं कविकल्पितस्य, कथाशरीरस्येतिवृत्तस्य रचनं प्रबन्धस्य रसादीनां व्यञ्जकत्वे प्रथमं निबन्धनं बोध्यम् इतिवृत्तवशेन कथाप्रसङ्गेनोपस्थिताम्, अननुगुणां रसप्रतिकूलां स्थितिं कथांशं त्यक्त्वा स्वयं कल्पयित्वापि मध्ये रसानुकूलायाः कथाया ऊहो द्वितीयं कारणं बोध्यम् । रसानां व्यञ्जनानुकूल्येन न पुनः केवलं नाट्यादिशास्त्रीयसिद्धान्तानुसरणस्पृहामात्रेण मुखप्रतिमुखगर्भविमर्शनिर्वहणसन्धीनां तदङ्गानाञ्चोपक्षेपादीनां योजनं तत्र तृतीयं निदानं ज्ञेयम् । अन्तरा मध्ये उचितावसरे रसस्योद्दीपनं प्रशमनञ्च तत्र चतुर्थं कारणं बोध्यम् । प्रबन्धस्यारम्भावसानपर्यन्तं प्रधानस्य रसस्यानुसन्धानं पञ्चमं तत्र कारणं ज्ञेयम् । यथेच्छमलंकारनिर्माणस्य प्रतिभासत्त्वेऽपि प्रस्तुतरसानुगुण्येनैवालंकाराणां योजनञ्च षष्ठं तत्र निबन्धनं भवतीति बोध्यम् । भावनामौचित्यन्तु प्रकृत्यौचित्याद् भवति । प्रकृतिश्चोत्तममध्यमाधमभेदेन त्रिप्रकारा, दिव्यमानुषादिभेदेन च त्रिप्रकारा भवति । तां सर्वामपि प्रकृतिं यथायोग्यमनुसृत्यासंकीर्णतयोपनिबध्यमानः स्थायीभाव औचित्यशाली

भवति। अन्यथा तु अधमप्रकृतावुत्तमप्रकृत्यौचित्येन, दिव्यप्रकृतौ मानुषप्रकृत्यौचित्येनोपनिबध्यमानो रत्यादिस्थायिभाव औचित्यं नावहति, प्रत्युत प्रतिकूलतया रचनाया मिथ्यात्वमुपस्थापयन् वैरस्यमादधाति। तथा च केवलमानुषस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिस्वरूपा उत्साहात्मकव्यापाराः कविनोपनिबध्यमानाः सौष्ठवशालिनोऽपि नीरसा एव प्रतीयन्ते। ननु सातवाहनप्रभृतीनां सर्वोर्दीर्णरपक्षमाणां दनाभुजां नागलोकगमनादयः श्रूयन्ते, तद्लोकसामान्यप्रभावादतिशयवर्णने किमनौचित्यमेवेति चेदुच्यते नास्माकमभिप्रायोऽयं यद् राज्ञां प्रभावातिशयवर्णनमनुचितमेव, किन्तु केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यमौचित्यं न योजनीयम्। दिव्यमानुषोभयाश्रितायान्तु कथायामुभयौचित्ययोजनमविरुद्धमेव। यथा पाण्डवादिकथायां दिव्यमानुषोचितायां तदुभयौचित्ययोजनं न वैरस्यमादधाति, सातवाहनादिषु च राजसु यावदपदानं श्रूयते, तावन्मात्रमुपनिबध्यमानमनुगुणत्वेन प्रतिभासते। तद्व्यतिरिक्तं तु तेषामेवोपनिबध्यमानमनुचितमेवेति तत्त्वम्। तदुक्तम्—'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्। प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥

(७०) प्रश्नः—**उत्साहादेर्दिव्यमानुषादौ तारतम्येऽपि रत्यादेः सर्वत्र तुल्यरूपतया तारतम्याभावात् तदौचित्यपरीक्षणे का वाचोयुक्तय इति सोद्धरणं विवेचयत।**

**उत्तरम्**—ननु उत्साहादेर्दिव्यमनुजयोः समानरूपत्वाभावेन तारतम्यात् तदौचित्यपरीक्षणस्यावश्यकत्वेऽपि रत्यादेः सर्वत्र तुल्यरूपत्वेनैव वर्णनीयतया तत्र दिव्यमानुषाद्यौचित्यपरीक्षणं व्यर्थमेवेति चेदत्रोच्यते–तत्रौचित्यातिक्रमे सुतरां दोषः। तथाहि—अधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का नाम न भवेदुपहास्यता? शृङ्गारेऽपि उत्तममध्यमाधमत्वेन नानाप्रकारं प्रकृत्यौचित्यं वर्तत एव। इदमत्र तत्त्वम्–उत्साहो यथा देवानां न तथा मनुष्याणामित्युभयौचित्यतारतम्यस्येव 'स्थैर्येणोत्तममध्यमाश्रयाणां नीचानां संभ्रमेण' इत्यादि नाट्यशास्त्रोक्तेः, यथा रतिरुत्तममध्यमप्रकृतीनां न तथाऽधमप्रकृतीनामिति रत्यौचित्येऽपि तारतम्यात् तत्परीक्षणमप्यावश्यकमेव। न चैवमपि रतौ दिव्यौचित्यपरीक्षणमयुक्तमेव, दिव्यानां तत्र तारतम्याभावादिति वाच्यम्? नाटकादौ 'रतं तथा।' दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत्। शयनाधरपानादि'...'एभिर्विवर्जितः' इति रीत्या राजादिषु उत्तमनायकेषु ग्राम्यसम्भोगशृङ्गारोपनिबन्धनस्याभिनयानौचित्येन निषेधवत् देवेष्वपि तन्नि-

नेत्रसूचनायोत्तमसानवप्रकृत्यौचित्यस्यैव रतौ दिव्यौचित्यस्य विवक्षितत्वेन तदतिरिक्तदिव्यौचित्यपरीक्षणे तात्पर्याभावात्। दृश्यकाव्यवत् तुल्ययुक्त्या श्रव्यकाव्येऽपि तादृशसम्भोगवर्णनस्यायुक्तत्वात्। तदुक्तं वृत्तौ–'तस्मादभिनेयार्थे श्रव्ये च काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं, तत् पित्रोः सम्भोगवर्णनमिव सुतरामसभ्यम्। तथैवोत्तमदेवताविषयम्।' न चैवमुत्तमप्रकृतिविषये किं सम्भोगश्रृङ्गारवर्णनमनुचितमेवेति वाच्यम्? सम्भोगश्रृङ्गारस्य परस्परप्रेमालापदर्शनसम्मेलनादिप्रकाराणामपि सम्भवेन केवलसुरतलक्षणमश्लीलांशं विहाय तादृशप्रकारान्तवर्णने दोषाभावात्। सम्भोगश्रृङ्गारप्रकारेषु उत्तमप्रकृतिविषये सुरतातिरिक्ता एव प्रकारा वर्णनीया इति हृदयम्। तस्मादुत्साहादिवद् रतावपि प्रकृत्यौचित्यं परीक्षणीयमेव। एवं विस्मयादिष्वपि ज्ञेयम्। यत्तु एवंविधे विषये महाकवीनां कालिदासादीनामप्यसमीक्ष्यकारिता लक्ष्ये दरीदृश्यते स दोष एव। स तु दोषो लोकोत्तरप्रतिभापिहितत्वात्तेषां न लक्ष्यते इति त्वन्यदेतत्। तथा च भरतादिस्थितिमनुवर्तमानेन महाकविप्रबन्धाँश्च पर्यालोचयता स्वप्रतिभाञ्चानुसरता कविनाऽवहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः। अर्थात् इतिहासादिषु रसवतीषु कथासु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यं, नेतरत्। तदुक्तं–'कथाशरीरमुत्पाद्य वस्तु कार्यं तथा तथा। यथा रसमयं सर्वमेवैतत् प्रतिभासते ॥'

(७१) प्रश्नः—**प्रबन्धस्य रसादिव्यञ्जकत्वे तृतीयचतुर्थकारणे सोदाहरणे प्रतिपाद्य प्रबन्धगतसंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणं व्यङ्ग्यार्थप्रदर्शनपुरस्सरं प्रतिपादनीयम्।**

**उत्तरम्**—प्रबन्धस्य रसादिव्यञ्जकत्वे चेदं मुख्यं तृतीयं निबन्धनं–यत् मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यानां पञ्चसन्धीनां तदङ्गानाञ्चोपक्षेपपरिकरप्रभृतीनां रसाभिव्यञ्जनाय योजनम्। अर्थात् यथा शरीरावयवसुसन्निवेशेनात्मन उत्कर्षो भवति तथैव सन्धि–सन्ध्यङ्गयोजनेन प्रबन्धव्यङ्ग्यरसस्योत्कर्षो जायते इति बोध्यम्। सन्धिश्च–'अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति' इति दर्पणोक्तदिशाऽवसेयः। तथा च सन्धयः पञ्च तदङ्गानि च चतुःषष्टिविधानि इति वृत्तावयवात्मकत्वेनार्थविशेषाः रसव्यञ्जनोपयोगिनः सुतरां भवन्तीति बोध्यम्। यथा रत्नावलीनाटिकायां–"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ, दैवे चेत्थं दत्तहस्तावलम्बे। सिद्धेर्भ्रान्तिर्नास्ति

सत्यं तथापि-स्वेच्छाकारी भीत एवास्मि भर्तुः ॥' इति प्रकृतवीररसव्यञ्जनोपयोगापेक्षयैव यौगन्धरायणोक्तस्वव्यापारदैवनिष्पत्तिरूपमुखमन्ध्यङ्गपरिन्यासादेः सन्निवेशः कविना कृतो न तु केवलं शास्त्रस्थितिसम्पादनेच्छया। अर्थात् सन्ध्यङ्गप्रयोजनं प्रतिपादयता मुनिना भरतेन सन्ध्यङ्गानां रसानुकूल्यस्यावश्यंभावस्यानुशिष्टत्वात् तत्प्रति श्रद्धान्ध्येन रसप्रतिकूलान्यपि केवलं तेन प्रतिपादितानीति कृत्वा गौरवादेव प्रबन्धेषु सन्धि-तदङ्गानि नैव सन्निवेशनीयानीति भावः। अन्यथा तथाऽऽचरणे कवेर्महती त्रुटिः सहृदयैरनुभूयते यथा-वीररसप्रधाने वेणीसंहारनाटके प्रकृतवीररसानुगुण्यमनवेक्ष्यैव कविना नारायणभट्टेन भानुमतीदुर्योधनयोर्योगे रतिभोगार्थसमीहारूपस्य विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य भरतानुशासनश्रद्धाजाड्येन कृतः सन्निवेशः सहृदयानां नितान्तं वैरस्यमादधाति।

इदञ्च चतुर्थं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तम्—यद् यथावसरं रसस्योद्दीपनप्रशमने भवतः। अन्यथाऽनवसरेऽपि पुनः पुनरुद्दीप्यमानो हि रसो वैरस्यमावहति। तदुक्तं लोचने—'गाढं ह्यनवपीडितो रसः सुकुमारतरमालतीकुसुमवज्झटित्येव म्लानिमवलम्बते विशेषतस्तु शृङ्गारः। अतएवानवसरे रसस्योद्दीपनप्रशमने रसदोषत्वेन प्रकाशादौ प्रतिपादिते। इहापि वक्ष्यते-'अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।' इति। उचितावसरे रसस्योद्दीपनप्रशमनयोरुदाहरणं यथा रत्नावल्यामेव मदनपूजनावसरे राजदर्शनानन्तरं 'कथमयं स राजोदयनो, यस्याहं तातेन दत्ता' इति सागरिकोक्त्या पूर्वरागशृङ्गारस्योद्दीपनमुचितावसरे विहितम्। अङ्कान्ते च वासवदत्ताया भयेन तत्स्थानात्तस्या निष्क्रमणोपन्यासेन तदुचितोपशमनं विहितम्। अग्रे च चित्रफलकोल्लेखेनोद्दीपनं, पुनः सुसङ्गताप्रवेशोपन्यासेन प्रशमनञ्चोपपादितम्।

प्रबन्धगतसंलक्ष्यक्रमव्यङ्ग्यवस्तुध्वनेरुदाहरणं यथा-'अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले। कङ्कालबहले घोरे सर्वप्राणिभयङ्करे॥ न चेह जीवितः कश्चित् कालधर्ममुपागतः। प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥' इति गृध्रगोमायुसंवादे मृतं शिशुमादाय श्मशाने दग्धुमुपागतान् तत्परिजनानपसारयितुं गृध्रस्योक्तिरियम्। 'इह दिन एव पललं भक्षयितुं समर्थस्य गृध्रस्योक्तौ प्रबन्धेन स्वतः सम्भविवाच्यवक्तृप्रकरणादिवैशिष्ट्येन गृध्रवृत्तिशवपरिजनविसर्जनाभिलाषात्मकं वस्तु ध्वन्यते। तादृशगृध्रवाक्यश्रवणेन शवं त्यक्त्वा गन्तुमुद्यतान् तानेव गोमायुर्व्याहरति-'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्। बहुविघ्नो मुहूर्तोऽयं

जीवेदपि कदाचन ॥ 'अमुं कनकवर्णाभं बालमप्राप्तयौवनम् गृध्रवाक्यात् कथं बाला-स्त्यजध्वमविशङ्किताः ॥' अत्रापि श्लोकद्वयात्मकः प्रबन्धो वाच्यद्वारा गोमायुवृत्ति-शवपरिजनगमननिवर्तनाभिलापात्मकं वस्तु व्यनक्तीति प्रबन्धस्य संलक्ष्यक्रमव्यङ्ग्य-ध्वनिव्यञ्जकत्वं स्फुटमेवेति भावः ।

(७२) प्रश्नः—**'सुप्-तिङ्-वचन-सम्बन्धैस्तथा कारकशक्तिभिः । कृत्त-द्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥' कारिकामिमां सोप-क्रमं व्याख्याय 'न्यक्कारो ह्ययमेव मे यदरयः' इति पद्ये संलक्ष्य-क्रमव्यङ्ग्यवस्तुध्वनित्वसत्वेऽपि कथमसंलक्ष्यक्रमरसध्वनित्व-मिति सयुक्तिकं विवेचयत ।**

**उत्तरम्**—सुबादिसमासान्तैः क्वचिदसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिर्द्योत्यो भवतीति भावः । अयमभिसन्धिः—यथा 'यस्त्वसंलक्ष्यक्रम....' इति कारिकाप्रति-पाद्यवर्णादिप्रबन्धान्तैः शब्दैः क्वचिद् विभावादीन् वाच्यान् बोधयित्वा तत्सम्बन्धेन साक्षाद् रसादिर्ध्वन्यते, क्वचिच्च वाच्यार्थान् प्रतिपाद्य वस्तुरूपान् विभावादींश्च व्यञ्जनयाऽवगमय्य तत्सम्बन्धेन परम्परया रसादिर्ध्वन्यते, तथैव सुबादिभिरपि साक्षात् परम्परया च रसादिर्ध्वन्यते । एवञ्च 'न्यक्कारो ह्ययमेव मे यदरय—' इत्यादिषु वस्तूनां साक्षाद् व्यङ्ग्यत्वेऽपि अन्ते रसादिध्वनावेव पर्यवसानं भवति । कारिकार्थश्च—अलक्ष्यक्रमो ध्वनेरात्मा रसादिः सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषैः सम्बन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति च शब्दान्निपातो-पसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते ।

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः, सोऽप्यत्रैव निहन्ति राक्षस-कुलं जीवत्यहो रावणः । धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा, स्वर्ग-ग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' इति पद्ये 'अयमेव मे यदरयः' इत्यत्र 'मे' इति ङस्विभक्त्या 'अरयः' इति बहुवचनेन एवकारेण च सम्भूय पराभवान्तरा-सम्भवद्वारा स्वपराक्रमातिशयः, त्रैलोक्याद्वितीयविक्रमेण निजेन सहैकस्यापि वध्य-घातकभावानौचित्यं किं पुनर्बहूनामिति च व्यज्येते । 'तत्राप्यसौ तापसः' इत्यत्र तापसचटकाण्प्रत्ययेन अपिना निपातेन च नितान्तवीरनृपतेः शत्रुत्वस्य कथञ्चि-त्सह्यत्वं तपोमात्रसाधनस्य युद्धानभिज्ञत्वेन तदनौचित्यं च ध्वन्येते । 'निहन्ति' 'जीवति' इति तिङ्भ्याम्, 'अत्रैव' इत्येवकारेण, 'नि'इत्युपसर्गेण 'अहो' इत्यव्ययेन

रावणपदेन च सम्मिलस्य 'मदनाधिष्ठिते देशे यदि स तिष्ठेत्' अत्र स्थितोऽपि यदि तूष्णीं भवेत्, अतूष्णीम्भावेऽपि निशाचरान् यदि न हन्यात्, कस्यचिदेकस्य निशाचरस्य हननेऽपि तत्कुलस्य समूलघातं सम्प्रत्येव न हन्यात्, तथात्वेऽपि यदि त्रैलोक्यविलक्षणविक्रमो रावणनामाहं न जीवेयं तदैतत् कथञ्चित् युज्येतापि, न तु तथा वर्तत इति विचित्रमेवेदं मद्विख्यातशौर्यप्रतिकूलमित्यनुमननमिति ध्वन्यते। 'धिग्धिक्छक्रजितम्' इत्युत्तरार्धेन च शक्रस्य दुर्जयत्वं, तद्विजयिनो मेघनादस्य शौर्यप्रकर्षेण रामविजयसौकर्यं, तदकरणे तस्य निन्दनीयतमत्वं, कुम्भकर्णस्य सर्वथा त्यक्तनिद्रतया क्षुद्रतापसस्य झटिति विजेयत्वं, तदननुष्ठाने तत्सर्ववैफल्यमित्यादि निरवधि वस्तु व्यज्यते, समस्तवाक्येन च कुत्साधिक्येन स्वक्रोधोद्बोधौचित्यं तेन रौद्ररसः, पुनर्युद्धोत्साहद्वारा वीररसो वा पर्यवसाने ध्वन्यते। तथा च प्रथमं तादृशानन्तवस्तूनां व्यञ्जनेऽपि अन्ततस्तद्द्वारैवोक्तरसध्वनेः पर्यवसानेन संलक्ष्यक्रमव्यङ्ग्यत्वेऽपि पर्यन्तेऽसंलक्ष्यक्रमव्यङ्ग्यरसध्वनेरेव सहृदयहृदयवेद्यत्वेन विरोधाभावादिति हृदयम्। किञ्चात्र रावणस्य स्वयं 'रावण' इति स्वनामोच्चारणासङ्गते रावणपदस्य त्रैलोक्याद्वितीयपराक्रमशालित्वविशिष्टस्वार्थबोधकत्वादर्थान्तरसंक्रमितवाच्यध्वनेरपि सत्त्वेन तथाविधव्यञ्जकबाहुल्यसद्भावेन च काव्यस्य सर्वातिशायिरचनासौन्दर्यं समुज्जृम्भते इत्यलं पल्लवितेन।

(७२) प्रश्नः—'**अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः। श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना॥ अस्मिन् पद्ये व्यङ्ग्यव्यञ्जकभावप्रकारान् सम्यग् विविच्य निम्नश्लोकयोर्व्यङ्ग्यार्थं सविशदं प्रतिपादयत—'अवसर रोउं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइं। दंसणमेत्तुम्मत्तेहिं जेहिं हिअअं तुह ण णाअम्॥' अण्णत्त वच्च बालअ! अह्णाअन्त किसमलोअसिएअम्। होजाआभीरुआण तुह्माण संवन्धो चिअ नहोइ॥'**

**उत्तरम्**—'अतिक्रान्तसुखाः कालाः'—इत्यत्र कृत्तद्धितवचनैरसंलक्ष्यक्रमव्यङ्ग्यः 'पृथिवी गतयौवना' इत्यनेन चात्यन्ततिरस्कृतवाच्यध्वनिः प्रकाश्यते। तथाहि—अतिक्रान्तेति अतीतकालार्थवाचिक्तप्रत्ययेन सुखस्य जात्वपि न वर्तमानत्वं तद्द्वारा कालस्यातिभीषणत्वम्, 'प्रत्युपस्थितेतिक्तप्रत्ययेन नितान्तप्रतिकूलतया दारुणदुःखानां पूर्वकालादेव सम्बन्धोऽनिराकरणीयत्वञ्च, गतेति क्तेन पृथिव्या यौवनस्यापरावर्तनो-

यत्वं, तेन तस्याः निस्सारतया हेयत्वं, दिवसानां पापिजनसम्पर्कबोधकच्छप्रत्ययेनापकृष्टतातिशयः, वहुवचनेन कालस्यात्यन्तक्लेशेन यापनीयत्वं, श्वः श्वः इति वीप्सया पापीयदिवसत्वे पृथिव्या गतयौवनत्वे च कालव्यापकत्वम्, व्यज्यन्ते, तैश्च व्यज्यमानैः सर्वैः निर्वेदद्वारा शान्तरसो व्यज्यते, अथ च यौवनस्याचेतनायां पृथिव्यां बाधात्, गतयौवनापदेन लक्षणामूलव्यञ्जनया लक्ष्यमाणोपभोगाक्षमत्वस्य हेयत्वं द्योत्यते तेनात्रात्यन्ततिरस्कृतवाच्यध्वनिरपि सहृदयैर्वेद्यते इत्याकूतम् ।

'अपसर रोदितुमेव निर्मिते मोत्पुंसय मे हताक्षिणी । दर्शनमात्रोन्मत्ताभ्यां याभ्यां हृदयं तव न ज्ञातम् ॥' इति कमप्यनुनयन्तं नायकम्प्रति खण्डिताया नायिकाया उक्तिरियम् । हे शठ ! अपसर अनुनयं विहाय दूरं गच्छ, रोदितुमेव, न तु दर्शनानन्दमनुभवितुं दैवेन निर्मिते अभाग्योपहते ममाक्षिणी मा उत्पुंसय, कृत्रिमानुनयेन रोदनबाहुल्यसम्पादनद्वारा नोच्छूने कुरु । केवलं तवावलोकनेनैव न तु व्यवहारसमीक्षणेन याभ्यां मदक्षिभ्यां तवैवंविधकपटोपन्यासपटुहृदयं न परिचितमिति भावः । अत्र प्रधानतया 'अपसरे'ति तिङन्तेन नायकविषयरोषप्रकटनद्वारा तदपराधानामक्षम्यत्वं, मानवप्रयासवैयर्थ्यसूचनद्वारा दैवकृतेरपरिवर्तनीयत्वञ्च व्यज्येते । गौणतया च तदनुयायिभिरेव—हतमात्र—हृदयादिशब्दैर्हृदयक्रमावलोकनानधिकारित्वसौभाग्याभाव—व्यवहार—विवेकवैधुर्य—शठत्व—मांसलत्वानि व्यज्यन्ते । 'अन्यत्र व्रज बालक ! तृष्णायमानः कथमालोकयस्येतत् । भो जायाभीरुकाणां युष्माकं सम्बन्ध एव न भवति ॥' इति प्रच्छन्नकामुकी काचित् प्रगल्भा नायिका निजभार्याया भीत्या सततं स्वसन्निधौ स्थातुमपारयन्तं वल्लभं रिरंसया कदाचिदुपगतं भर्त्सयति । हे बालक ! प्रणयतारतम्यपरिच्छेदाकुशल ! अन्यत्र गच्छ, न तु मदन्तिके तिष्ठ, ये खलु त्वादृशाः पाणिगृहीत्या भ्रूभङ्गमात्रेण नितरां बिभ्यति, तेषां परकीयया प्रेयस्या प्रणयबन्धो न कथमपि संभाव्यते इति भावः । अत्र बालकेति सम्बुद्ध्या विवेकशून्यत्वं, तेन जायाभीरुकत्वेऽपि अन्यप्रणयौत्सुक्यायोग्यत्वं, प्रणयतारतम्यपरिच्छेदापाटवञ्च, तृष्णायमान इत्यनेन, भो इति सोल्लुण्ठसंबुद्ध्या च वस्तुतत्त्वानभिज्ञत्वं, जायाशब्देन सन्तानजननमात्रकारणत्वद्वारा प्रणयादिराहित्यं, तेन तस्या भीतेरनौचित्यं, भीरुत्वेन नितान्तपारवश्यं, तेन पुनः प्रणयभङ्गसम्भावना, कुत्सार्थककप्रत्ययेन नायकविषयकेर्ष्यातिशयोऽवज्ञाप्रकर्षः प्रणयबन्धासंभवश्च व्यज्यते । एवञ्च जायाभीरुकाणामिति षष्ठ्यर्थसम्बन्धस्य तद्धितकप्रत्ययस्य च व्यञ्जकत्वं स्फुटमेवेति ॥

(७४) प्रश्नः—निपातानां व्यञ्जकत्वस्य व्यङ्ग्यार्थप्रदर्शनपुरस्सरमुदाहरणं प्रतिपाद्य निम्नोद्धरणत्रयाणां सोपक्रमं प्रकरणनिर्देशपूर्वकं व्यङ्ग्य-व्यञ्जकभाववैशिष्ट्यं प्रतिपादयत-'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्राक्....' 'मनुष्यवृत्त्या समुपाचरन्तम्'....'अहो बतासि स्पृहणीयवीर्य !....' इति ।

**उत्तरम्**—'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुस्सहो मे । नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥' इति प्रेयस्या उर्वश्या विरहानलसन्तप्तस्य पुरुरवस उक्तिरियम् । अतिदुस्सहः प्रेयसीविरहः, काकतालीयन्यायेन जलदसमयश्चोपनतस्ततःकथं मया जीवनं रक्षणीयमिति भावः । अत्र चकारद्वयेन विरहोपनमन-नवजलधरागमजन्यच्छायारमणीयदिवसभवनयोः क्रिययोर्यौगपद्यं पयोदच्छायाया उद्दीपनत्वं तन्मलिनदिवसानां दुर्वापत्वं विरहवेदनाया असह्यत्वोत्कर्षश्च व्यज्यन्ते, अत एवात्र चकाररूपनिपातद्वयस्य व्यञ्जकत्वं स्फुटम् **'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्राक्**, जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन् । ते सान्द्रीभूय सद्यः क्रमविशददशाशादशाली विशालं, शश्वत् सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥' इति सम्पूर्णं पद्यमिदं मयूरभट्टकविकृतसूर्यशतकघटकं विद्यते । अत्र 'समुद्वीक्ष्य' इत्येतद्घटकसम्-उद्-वीनामुपसर्गाणां त्रयं सम्यगुच्चैर्विशेषेण दर्शनं बोधयत् भगवतः सूर्यस्य सकलजन्तुविषयकानुकम्पातिशयं तद्विषयकरतिभावञ्च द्योतयतीति भावः । तथा चात्र तादृशव्यङ्ग्यार्थस्योक्तोपसर्गाणाञ्च व्यङ्ग्यव्यञ्जकभावः स्फुटतया प्रतिभाति । **'मनुष्यवृत्त्या समुपाचरन्तं**, स्वबुद्धिसामान्यकृतानुमानाः । योगीश्वरैरप्यनुबोधमीशं, त्वां बोद्धुमिच्छन्त्यबुधाः कुतर्कैः ॥' इति द्वितीयोद्धरणस्य सम्पूर्णांशो बोध्यः । अत्र समुपाचरन्तमित्येतद्घटकसम्-उप-आङ्रूपोपसर्गाणां समुदायः सम्यग्-उपांशु-आसमन्तात् मनुष्यस्वरूपेणोशाचरणमभिदधानो जन्तुसन्तानानुग्रहोत्कर्षं वस्तु, ईशविषयकरतिभावञ्च व्यनक्तीति समुपाङां तादृशव्यङ्ग्यार्थम्प्रति व्यङ्ग्यव्यञ्जकभावः स्फुटः । 'सुराः समभ्यर्थयितार एते, कार्यं त्रयाणामपि विष्टपानाम् । चापेन ते कर्म न चातिहिंस्रम्, **अहो बतासि स्पृहणीयवीर्यः** ॥' इति शिवसमाधिभङ्गायेन्द्रस्य मदनप्रशंसापूर्वकं प्रोत्साहनम् । अत्र 'अहो' 'बत' इति निपातद्वयं क्रमश आश्चर्यमामन्त्रणञ्चाभिदधत् कामदेवपराक्रमस्यालौकिकत्वप्रतिपादनद्वाराऽद्भुतरसं द्योतयतीति स्फुटं तयोर्व्यञ्जकत्वम् ।

(७५) प्रश्नः—पदपौनरुक्त्यस्यापि व्यञ्जकत्वदृष्ट्या क्वचिद् भूषणत्वमेव न तु दूषणत्वमिति सोदाहरणं सम्यग् विविच्य निम्नपद्ये व्यङ्ग्य-व्यञ्जकभावप्रकारः प्रतिपादनीयः—समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा। अइरा होइन्ति पहा मणोरहाणं पि दुल्लङ्घा॥'

**उत्तरम्**—'यद्वञ्चनाहितमतिर्बहुचाटुगर्भं, कार्योन्मुखः खलजनः कृतकं ब्रवीति। तत्साधवो न न विदन्ति विदन्ति किन्तु, कर्तुं वृथा प्रणयमस्य न पारयन्ति॥' इत्यस्यायं भावः दुष्टजनानां प्रतारणौपचारिकवचनरचनाचातुरीं जानाना अपि महात्मानो नैसर्गिकसौजन्यपरवशतया तद्विपरीतमाचरितुमपारयन्तस्तदनुकूलमेवाचरन्तीति बोध्यः।

अत्र नञ्द्वयस्य प्रकृतार्थदाढर्यबोधकतया 'न विदन्ति न' इत्येतावदुक्त्यैव सर्वसामञ्जस्ये पुनः विदन्तीति पदोपादानमज्ञत्वव्यावृत्तिमुखेन महात्मनामव्यभिचारेणान्यवैलक्षण्येन वा तदभिज्ञत्वं प्रकाशयतीति पदपौनरुक्त्येऽपि न कथितपदत्वदोष इति भावः।

'समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः। अचिराद् भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घ्याः॥' इति प्रवत्स्यन्तं कञ्चिन्नायकं नायिका व्याहरति—प्रत्यासन्ने जलदसमये तव प्रवासो नोचितः, सन्देशहारकादेरपि सञ्चारासम्भवादिति भावः। अत्र भविष्यन्तीति पदघटक-स्यविकरणविशिष्टतिङ्प्रत्ययस्य भविष्यत्कालबोधकतया भविष्यन्निति सम्भावनामात्रविषयोऽपि जलदसमयो यदि नितरां मदनोद्दीपकस्तर्हि सुतरां प्रत्यासीदन्निति वस्तुमुखेन प्रवासहेतुकविप्रलम्भशृङ्गाररसपोषणव्यञ्जनयोः कारणत्वम्। तदुक्तं वृत्तौ—'अत्र अचिराद् भविष्यन्ति पन्थानः' इत्यत्र भविष्यन्तीत्यस्मिन्पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते। अयं हि गाथार्थः प्रवासहेतुकविप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान् भवतीति शेषः। भविष्यत्कालस्य व्यञ्जकत्वमत्रावसेयम्।

(७६) प्रश्नः—'तद् गेहं नतभित्ति, मन्दिरमिदं लब्धावगाहं दिवः'—पद्येऽस्मिन् ससन्दर्भं व्यङ्ग्यव्यञ्जकभावप्रकारं विविच्य, वाच्यवृत्तिव्यञ्जनयैव व्यङ्ग्यरसादीनां प्रतीतेः प्रकृतिपर्यन्तानां शब्दानां तद्व्यञ्जकत्वनिरूपणवैयर्थ्यमपाकृत्य सहृदयतापदार्थः परिस्करणीयः।

**उत्तरम्**—'तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावगाहं दिवः, सा धेनुर्जरती, चरन्ति करिणामेता घनाभा घटाः। स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषितामाश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥' इति पद्ये भूतपूर्वदरिद्रस्य कृष्णमित्रस्य सुदाम्नोऽद्भुतां सम्पत्तिमकस्मादवलोक्य सञ्जातविस्मयः कश्चिद् वर्णयति। अल्पीयसैव कालेन सम्भावनाऽतीतमेतावत्परिवर्तनं सञ्जातमिति महदाश्चर्यमिति भावः। अत्र दिवसैरित्येतत्पदघटकदिवसरूपप्रकृतिभागो मासादिव्यावर्तनेन कालाल्पत्वसूचनद्वारा कल्पनाऽतीतसम्पत्तेराधिक्यं द्योतयति। एवं 'तत्-इदम्-इदानी'मित्यादि सर्वनाम्नामपि विलक्षणार्थव्यञ्जकत्वं बोध्यम्। तथा हि स्मृतिविषयवाचकेन तत्पदेन 'नतभित्ति' इति प्रकृत्यंशसहकारेण गेहस्यातिदुरवस्थत्वं व्यज्यते, एवमनुभवविषयवाचकेनेदंशब्देन विशेषणसाहाय्येन मन्दिरस्योत्कर्षः, एवमग्रेऽपि तदिदंशब्दौ स्मरणानुभवविषययोरर्थयोरतितारतम्यं द्योतयतः। अत एवात्र सर्वनाम्नां व्यञ्जकत्वं हृदि निधायैव क्वेत्यादिशब्दप्रयोगो न कृत इत्यलं पल्लवितेन।

ननु वाच्यवृत्तिव्यञ्जनयैव व्यङ्ग्यरसादीनां प्रतीतिसम्भवेन प्रकृत्यन्तानां शब्दानां व्यञ्जकत्वकथनमसङ्गतमेवेति चेदत्रोच्यते—तथा सति सुप्तिङादीनां व्यञ्जकत्वासम्भवापत्तेः। न चेष्टापत्तिरिति वाच्यम्? तुल्ययुक्त्या पदानामपि वाक्यशक्तिवादिमते वाच्यवाचकभावविरहेण व्यञ्जकत्वस्य दुर्घटत्वात्। अवाचकानां गीतशब्दानां माधुर्यादिगुणव्यञ्जकानां स्पर्शादिवर्णानाञ्च तादृशानामेव व्यञ्जकत्वस्योभयवादिसिद्धतया प्रकृते तद्व्यञ्जकत्वस्वीकारे वैषम्ये बीजाभावाच्च। यत्रापि क्वचिदर्थविशेषापेक्ष्या रसादयः, तत्रापि सहकारितया शब्दस्य व्यञ्जकत्वमर्यादायातमेव, तादृशार्थबोधविशेषस्य तादृशशब्दमन्तरा भवितुमशक्यत्वात्। तदुक्तं—'शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः। एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता॥' इति। इदमत्र तत्त्वं स्रक्चन्दनादिरूपेषु शृङ्गाराङ्गवाचकशब्दविशेषेषु विच्छित्तिविशेषाधायकत्वं शृङ्गारे विद्यते, बीभत्सादौ तु नैवेति प्राचीनैरर्वाचीनैश्चास्माभिः प्रतिपादितम्। तच्चिदानन्तु व्यञ्जनैव, यतः शृङ्गारे व्यङ्ग्ये तद्व्यञ्जकतया तेषु शब्देषु चारुत्वम्, बीभत्सादिषु तु तद्व्यञ्जनप्रतिबन्धकत्वेनाचारुत्वमिति शब्दानां विश्लेषणतया स्वीकृतं चारुत्वमपि अर्थापत्तिन्यायेन तत्तच्छब्दानां व्यञ्जकतामापादयतीति भावः। अन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषो न स्यात्। अथ नासौ विशेषो व्यञ्जकत्वनिबन्धनः, अपित्वपूर्वः सहृदयैरेव वेद्यः कश्चिदिति चेद-

त्रोच्यते–किमिदं सहृदयत्वं नाम ? किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वम् ? उत रसभावादिमयकाव्यस्वरूपपरिज्ञाननिपुणत्वम् ? प्रथमपक्षे तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात्, समयान्तरेणान्यथापि व्यवस्थापनसम्भवात्। द्वितीयपक्षे तु रसज्ञतैव सहृदयत्वमिति तथाविधैः सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय एव तेषां मुख्यं चारुत्वं बोध्यम्।

(७७) प्रश्नः—**के रसादिविरोधिनः पदार्थाः ? इति सोपष्टम्भमुदाहरणप्रदर्शनपुरस्सरं विवेचनीयम्।**

**उत्तरम्**—निम्नपञ्चप्रकारका विरोधिपदार्थाः प्रकृतरसस्य विरोधिनो भवन्ति। (१) विरुद्धरससम्बन्धिविभावादीनां वर्णनम्। (२) प्रस्तुतरसादिसम्बद्धस्यापीतिवृत्तस्यात्यन्तविस्तृतरूपेण वर्णनम्। (३) अनवसरे एव रसादीनां विच्छेदः, असमये वा प्रकाशनम्। (४) रसादेः परिपोषानन्तरमपि पुनः पुनरुद्दीपनम्। (५) व्यवहारस्य वृत्तीनां वाऽनौचित्येन वर्णनम्। तदुक्तं–'विरोधिरससम्बन्धिविभावादिपरिग्रहः। विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्। अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्। परिपोषं गतस्यापि पौनःपुन्येन दीपनम्। रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च॥' इति। तत्र विरोधिरसविभावपरिग्रहो यथा–शान्तरसविभावेषु तद्विभावतयैव निरूपितेषु अनन्तरमेव श्रृङ्गारादिवर्णने, तथा हि शान्तश्रृङ्गाररसयोः सामानाधिकरण्ये विरोधः, तदीयस्थायिभावयोः शमरत्योरेकत्रानवस्थानात्। यथा निसर्गशान्तत्वेनोदासीनस्य शिवस्य श्रृङ्गारावलम्बनीभूतनायकत्वेन वर्णने 'हरस्तु किञ्चित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः–' इत्यत्रालम्बनविरोधः। उद्दीपनस्य तु 'मानं मा कुरु तन्वङ्गि ज्ञात्वा यौवनमस्थिरम्...' इति प्रस्तुतश्रृङ्गाररसविरुद्धशान्तरसोद्दीपनयौवनास्थैर्यनिवेदने विरोधः। विरोधिरसभावपरिग्रहे विरोधो यथा–'प्रियं प्रति प्रणयकलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये। तथा हि–'प्रसादे वर्तस्व प्रकटय मुदं सन्त्यज रुषं''''''न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः॥' विरोधिरसानुभावपरिग्रहे विरोधो यथा—प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने। तथा हि तत्प्रकरणे नायकस्यौष्ठदंशनतर्जनपादप्रहारादिवर्णनं नितरां रसभङ्गाय कल्पते। अयं च द्वितीयो रसभङ्गहेतुर्यत्प्रस्तुतरसाद्यपेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वित-

स्यापि विस्तरेण कथनम्। यथा विप्रलम्भश‍ृङ्गारे नायकस्य कस्यचित् वर्णयितुमुपक्रान्तस्य कवेर्यमकाद्यलङ्कारनिबन्धरसिकतया महता प्रबन्धेन पर्वतादिवर्णनम्। तथाहि हयग्रीववधे नायकं विष्णुं विहाय प्रतिनायकस्य हयग्रीवस्य जलकेलिवनविहारादीनां वर्णनं कृतम्। अयञ्च तृतीयो रसभङ्गहेतुर्यदकाण्डे एव रसस्य विच्छेदः अकाण्डे च प्रथनम्। तत्रानवसरे विच्छेदो यथा—नायकस्य कस्यचित् वाञ्छनीयसमागमया कयाचिन्नायिकया परां परिपोषपदवीं प्राप्ते श‍ृङ्गारे विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने, तथा हि रत्नावल्यां बाभ्रव्यागमने रत्नावलीं विस्मृत्य वत्सराजेनोदयनेन विजयवर्मणो व्यापारश्रवणं कविना वर्णितम्। अनवसरे प्रकाशनञ्च रसस्य यथा—प्रवृत्ते प्रवृद्धविविधवीरसंक्षये कल्पसंक्षयकल्पे घोरसंग्रामे देवप्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भश‍ृङ्गारस्योचितं निमित्तमन्तरेणैव श‍ृङ्गारकथोपन्यासः। तथा हि वेणीसंहारे भानुमतीदुर्योधनसमागमे विलासनाम्नि प्रतिमुखसन्ध्यङ्गे संभ्रमे आरब्धे तत्सम्बद्धत्वमुपेत्य दुर्योधनस्यासामयिकः श‍ृङ्गारोपन्यासः प्रकृतवीररसविच्छेदं जनयति। अयञ्च तुरीयः रसभङ्गहेतुर्यत्परिपोषं गतस्यापि रसस्य पौनःपुन्येनोद्दीपनम्। उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनःपुनः परामृश्यमानः परिम्लानकुसुमकल्पः परिकल्पते। तेन सहृदयानां महद्वैमुख्यं भवति। यथा कुमारसम्भवे रतिविलापे करुणरसस्य पुनःपुनर्दीप्तिः। अयञ्च पञ्चमो रसभङ्गहेतुर्यत् वृत्तेर्व्यवहारस्यानौचित्येन वर्णनम्। यथा नायकम्प्रति नायिकायाः कस्याश्चिद् उचिताङ्गभङ्गिमन्तरेणैव स्वयं सम्भोगाभिलाषवर्णनम्। विभ्रमेणैव रिरंसाप्रकाशनं रमणीनां चमत्काराय कल्पते, कण्ठरवेण प्रकाशनन्तु ग्राम्यतां द्योतयत् रसभङ्गाय कल्पते इत्यलम्।

तदुक्तं—'मुख्या व्यापारविषयाः सत्कवीनां रसादयः।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः॥'
'नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः॥'
'पूर्वे विश‍ृङ्खलगिरः कवयः प्राप्तकीर्तयः।
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा॥'
'वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः॥'

(७८) प्रश्न—'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्। बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥' कारिकामिमां सोपष्टम्भं व्याख्याय, विप्रलम्भश्रृङ्गाराङ्गस्य मरणस्य वर्णनं समुचितं न वा? समुचितश्चेत्? कीदृशमिति सर्वनविकलमुपपादयत।

उत्तरम्—इतः पूर्वं रसादिविरोधिनां परिहारप्रकारमुक्त्वा साम्प्रतं तत्प्रतिप्रसवमाह—'विवक्षिते रसे' ' ' इत्यादि। अयं भावः—विवक्षिते प्रस्तुते रसे लब्धप्रतिष्ठे स्वसामग्रीसमवधानेन प्राप्तपरिपोषे सति बाध्यानां प्रकृतरसेन तदङ्गेन वाऽभिभवितुं योग्यानाम्, अन्यत्राङ्गभावमप्राधनत्वं स्वभावाद् आरोपाद् वा प्राप्तानां विरोधिरसानाम्, उक्तिरुपादानमच्छला निर्दुष्टा भवतीत्याकूतम्। तथा हि विरोधिनां बाध्यत्वेनोक्तिर्हि प्रस्तुतरसपरिपोषायैव कल्पते, बाध्यमानेन रिपुणाऽनुस्रियमाणस्य राज्ञ उत्कर्ष एव भवति नापकर्ष इति भावः। एवमङ्गभावञ्च प्राप्तानां विरोधिनां तावदुक्ताविरोध एव न विरोधः, रिपुचरस्याप्यनुचरीभावे स्वामिनः प्रकर्षस्यैव दर्शनात्। तेषामङ्गताप्राप्तिश्च क्वचित्स्वभावात्, क्वचिदारोपाच्च। यथा विप्रलम्भश्रृङ्गारे तदङ्गानामेव व्याध्यादीनां वर्णनमदोषाधायकं भवति, न त्वतदङ्गानामालस्योग्रताजुगुत्सादीनामनुपकारकत्वात्। तादृशानां वर्णनन्तु दोषाधायकमेव बोध्यम्। परन्तु मरणस्य विप्रलम्भश्रृङ्गाराङ्गत्वेऽपि तद्वर्णनं नौचित्यमञ्चति। तदाश्रयभूतस्य नायिकादेरेव विच्छेदेन रसस्यात्यन्तविच्छेदात् अर्थात् श्रृङ्गाराश्रयभूतस्य नायकादेर्विनाशे सति तद्वृत्तिरतेरपि विनाशात् तत्स्थायिभावकस्य रसस्यात्यन्तविच्छेदसंभवान्मरणं न वर्णनीयमिति भावः। न च मरणवर्णननिषेधो नोचितः, तत्र श्रृङ्गाररसविच्छेदेऽपि तथाविधे विषये शोकस्थायिभावकस्य करुणस्यैव परिपोषसम्भवादिति वाच्यम्? तत्र करुणस्यास्वादत्वेऽपि तदुद्देशेन सहृदयानामप्रवृत्तेस्तस्य वक्तुमशक्यत्वात्। प्रस्तुतस्य विप्रलम्भस्य विच्छेदात्। न चैवमलब्धप्रसरः करुणः साहित्यजगति दत्तजलाञ्जलिरेव स्यादिति तु न शङ्कनीयम्, करुणरसप्रधाने काव्ये करुणस्यैव प्रधानतया प्रस्तुतत्वेन तत्र करुणस्य लब्धावकाशत्वात्। किन्तु श्रृङ्गारेऽपि मरणस्यादीर्घकालप्रत्यापत्तिसम्भवे कदाचिदुपनिबन्धो न दोषाय कल्पते तदुक्तं—'रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायं तु तद्वाच्यं चेतसाऽऽकांक्षितं तथा ॥ वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥' इति। तत्र पण्डितराजेन जातप्रायं मरणं वर्णितं यथा—'दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत्।

अधुना खलु हन्त ! सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि ॥' चेतसाऽऽकाङ्क्षितं यथा–'रोलम्बाः परिपूरयन्तु हरितो झाङ्करकोलाहलैर्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि । माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं, प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥' अचिरजातप्रद्युम्नादिकन्तु कादम्बर्यां बाणभट्टेन महाश्वेता–पुण्डरीकवृत्तान्ते वर्णितमेवेति शम् ।

(७९) प्रश्नः—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्...' इत्यस्य पद्यस्य विवक्षितार्थं सोपक्रमं विविच्य विरोधिरसाङ्गानामन्यरसाङ्गभावप्राप्तेरदोषत्वमुदाहरणयोः सङ्गमय्य प्रतिपादयत ।

उत्तरम्—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा, दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा, चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति ॥' इति पद्ये विवक्षितरसस्य लब्धप्रतिष्ठत्वे सति विरोधिरसाङ्गानां बाध्यत्वेनोक्तौ यथा दोषो न भवति तथा प्रतिपादयति । उर्वशीं दिदृक्षुः पुरूरवसो विमर्शः–इह उर्वशीवेश्यासक्तिरूपमकार्यं क्व ? शशलक्ष्मणश्चन्द्रस्य कुलञ्च क्व ? इत्युभयोर्महद्वैषम्यमित्यनेन शान्तरससञ्चारी वितर्को द्योतितः । भूयोऽपि त्रैलोक्यसुन्दरी सोर्वशी केनापि प्रकारेण दृष्टा स्यादित्यौत्सुक्येन शृङ्गारसञ्चारिभावेन द्योतितेन स वितर्को बाध्यते । तच्च नोऽस्माकं चापल्यप्रभृतिदोषाणां प्रशमाय शास्त्रश्रवणमस्तीति व्यज्यमानया शान्तसञ्चारिण्या मत्या बाध्यते । सा च मतिः, प्रणयकोपेऽपि तस्या मुखं परमकमनीयं प्रतिभातिस्मेत्यहो परमाश्चर्यमिति द्योत्यमानया शृङ्गाराङ्गभूतया स्मृत्या बाध्यते । ताञ्च स्मृतिं, तथाऽऽचरन्तं मां निष्पापा विद्वांसः किं कथयिष्यन्तीति द्योत्यमाना शान्तसञ्चारिणी शङ्का बाधते । सा च शङ्का स्वप्नेऽपि सा प्रेयसी दुर्लभेति द्योत्यमानेन दैन्येन शृङ्गाराङ्गेन बाध्यते । तदपि दैन्यं, चेतः ! धैर्यमुपेहीति व्यज्यमानया शान्तसञ्चारिण्या धृत्या बाध्यते । पर्यन्ते च कः खलु धन्यो युवा, नत्वहमिवाधन्यः, तस्या अधरं पास्यतीति व्यज्यमाना शृङ्गाराङ्गभूता चिन्ता तां धृतिमपि बाधते इति पर्यवसाने विप्रलम्भशृङ्गाररसस्यैव विश्रान्तिधामतया आनुषङ्गिकत्वेन तद्विरोधिशान्तरसाङ्गानां वितर्कादीनामुपनिबन्धोऽपि न दोषाधायको विरोधिनां बाधितत्वादिति भावः ।

विरोधिरसाङ्गानामङ्गभावप्राप्तिस्तु द्विविधा–स्वाभाविकी, समारोपिता च । तत्र

स्वाभाविक्या अङ्गभावप्राप्तेरुदाहरणं यथा—'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्। मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥' इति वर्तते विरहिण्या अवस्थावर्णनमिदम्। अत्र भ्रम्यादीनां प्रस्तुतविप्रलम्भशृङ्गार-विरोधिकरुणरसपोषकत्वेऽपि प्रकृते स्वभावादेव विप्रलम्भपोषकत्वेनाङ्गत्वप्राप्तौ सत्या-मुपादानं न दोषाय कल्पते इति भावः। समारोपिताङ्गभावप्राप्तेरुदाहरणं यथा—'कोपात् कोमललोलबाहुलतिकापाशेन वद्ध्वा दृढं, नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः। भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं, धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन्॥' इति पद्ये प्रस्तुतविप्रलम्भप्रतिकूलरौद्ररसा-ङ्गानां कोपबन्धनताडनानां बाहुलतिकैव पाश इति रूपकवलाद् रौद्रस्य सामग्र्य-भावादनिष्पत्त्या आरोपिताया अङ्गभावप्राप्तेः विप्रलम्भाङ्गतायामुक्तिर्न दोषाय।

(८०) प्रश्नः—**'क्षिप्तो हस्तावलग्नः प्रसभमभिहतः—' इति पद्ये पयः-पावकयोरिवात्यन्तविरुद्धयोः करुणशृङ्गारयोः कथमेकत्र समा-वेश इति सोपक्रमं विविच्य 'अयं स रशनोत्कर्षी पीनस्तन-विमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥' इत्यत्र कया रीत्या विप्रलम्भस्य करुणाङ्गत्वमिति सयुक्तिकं विवेचयत।**

**उत्तरम्**—अयं भावः प्रस्तुतत्वाद् वाक्यार्थप्रधानीभूतमन्यं प्रति परस्पर-विरोधिनोऽपि रसद्वयस्याङ्गता भवति, तत्र पराङ्गत्वेनास्वतन्त्रयोस्तयोर्न विरोधः। तदुक्तम्—'अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्॥' इति। तेन 'क्षिप्तो हस्ताव-लग्नः प्रसभमभिहतोऽप्याददानोऽशुकान्तं, गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण। आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः, कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥' इत्यत्र प्रधानीभूतत्रिपुरारिप्रभावाति-शयम्प्रति अङ्गत्वं प्राप्तयोः परस्परं विरोधिनोरपि करुणशृङ्गारयोर्न विरोध इति भावः। यथा मिथोविरुद्धयोरपि अनुचरयो राज्ञोऽनुरोधेन भिया वा न विरोधस्तथै-वेहापीति तत्त्वम्। ननु पयःपावकयोरिव नितान्तविरुद्धयोरन्यपरत्वेऽपि कथं विरोधनिवृत्तिरिति चेत्, उच्यते विधावेव विरुद्धसमावेशदुष्टत्वेनानुवादे विरुद्धयोः समावेशे दोषाभावात्। अर्थात् विरोधिनोः सहविधानासम्भवात् विधेयतायामेव दोषः, उद्देश्यतायान्तु विरुद्धयोरपि पराधीनयोरप्राधान्येन समावेशस्य दर्शनेन विरोधाभावः। यथा 'एहि गच्छ, पतोत्तिष्ठ, वद मौनं समाचार' इत्यादावागमन-

गलनादीनां परस्परविरुद्धानामपि विधेयीभूतध्वनिक्रीडनस्योद्देश्यतया पराधीनत्वेन यथा विरोधाभावस्तथैव 'क्षिप्तो हस्तावलग्नः-' इत्यत्र करुणश्रृङ्गारयोरपीति भावः तथाहि प्रकृते पद्ये करुण-मानहेतुकविप्रलम्भश्रृङ्गारयोर्न विधेयत्वमपि तु प्राधान्येन वाक्यार्थबोधविषयतया त्रिपुररिपुप्रभावातिशयस्यैव विधेयत्वम्, अत एव तदङ्गतयैव तयोर्व्यवस्थानात्। ननु वाच्यदशायामेवोद्देश्यविधेयभावो, न तु व्यङ्ग्यदशायां, रसादयस्तु व्यङ्ग्या एवेति तेषु विध्यनुवादभावो न शक्यते वक्तुमिति चेन्न वाक्यार्थभूतस्य वाच्यस्य विध्यनुवादभाववत्तुल्ययुक्त्या तदाक्षिप्तव्यङ्ग्यरसादेरपि विध्यनुवादभावस्यापलापासम्भवात्। वस्तुतस्तु यथा जलस्य शैत्यं वह्नेरुष्णत्वञ्च परस्परं विरुद्धमपि सम्भूय तण्डुलानामोदनरूपं कार्यं प्रयोजयति, तथैव निमित्तभूतहस्तक्षेपादिरूपानुभावसूचितौ करुणविप्रलम्भौ मिथो विरुद्धावपि सम्मिलत्य शाम्भवशराग्निजनितदुरितदाहस्य त्रिपुरारिप्रभावातिशय-तद्विषयकरतिभावव्यञ्जनात्मककार्यं प्रयोजयतः। तथा च मिथोविरुद्धयोरपि तयोः सहकारितया तादृशव्यङ्ग्यशिवभक्त्यतिशयव्यञ्जनकार्यजनकत्वं नासम्भवीति बोध्यम्। न हि सहकारिणां विरोधः कार्योत्पत्तिं प्रतिबध्नातीति भावः। तदुक्तं वृत्तौ-'दृश्यते विरुद्धोभयसहकारिणः कारणात् कार्यविशेषोत्पत्तिः, विरुद्धफलोत्पादनहेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धत्वम्, न तु विरुद्धोभयसहकारित्वमिति'। किञ्च नायकस्याभिनन्दनीयोदयस्य कस्यचित् प्रभावातिशयवर्णने तत्प्रतिपक्षाणां यः करुणो रसः स परीक्षकाणां न वैक्लव्यमादधाति। प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यते इत्यतस्तस्य कुण्ठशक्तिकत्वात् तद्विरोधविधायिनो न कश्चिद्दोषः। तस्मात् वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी यो रसः, स रसविरोधीति वक्तुं न्याय्यः, न त्वङ्गभूतस्य कस्यचिदिति भावः।

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥'

इति पद्ये संग्रामभूमौ भूरिश्रवसश्छिन्नं भुजमवलोक्य तद्वनिताया विलापः कविना वर्णितः। अत्र श्रृङ्गारानुकूलरशनाकर्षकत्वादिभूतपूर्वविलासस्मरणव्यङ्ग्योऽपि श्रृङ्गारः सपदि तत्स्मरणस्य शोकातिशयोद्दीपकतयोपयोगात् करुणस्याङ्गत्वं प्राप्नोति, यतः प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः संस्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति। तथा च शोकस्यैव विश्रान्तिधामतया करुणस्यैव प्राधान्यमत्र बोध्यम्। तदुक्तं वृत्तौ-'अथवा वाक्यार्थीभूतस्यापि कस्यचित् करुणरसविषयस्य तादृशेन श्रृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते॥' इति। एवं 'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः पादैः

पातितयावकैरिव पतद्भिर्बाष्पाम्बुधौतानना। भीताभर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना, दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥' इत्यत्रापि प्रधानतया प्रतीयमाने राजविषयकरतिभावे मिथो विरुद्धयोरपि करुणश्रृङ्गारयोरङ्गत्वेन न विरोधप्रतीतिः। साम्प्रतिकशोचनीयदशावर्णनाद् करुणस्य, भूतपूर्वविवाहावस्थावर्णनाद् श्रृङ्गारस्य चांशतः प्रतीयमानतयोक्तरतिभावेऽङ्गताप्राप्तिरिति बोध्यम्।

(८१) प्रश्नः—**अधस्तन्यौ कारिके सोपक्रमं व्याख्येये—**

**'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।**
**नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः॥'**
**'कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।**
**तथा रसस्यापि विधौ विरोधो नैव विद्यते॥'**

**उत्तरम्**—'प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने। एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता॥' इति पूर्वकारिकायां महाकाव्यादिषु परस्परनैरपेक्ष्येण वा बहूनां रसानां निबन्धनस्य प्रसिद्धौ सत्यामपि प्रबन्धानां सौन्दर्यातिशयमिच्छता कविना तेषां रसानामन्यतमः कश्चिद् विवक्षितो रसोऽङ्गित्वेन निवेशनीय इति सिद्धान्तस्य प्रतिपादितत्वेऽपि वेद्यान्तरस्पर्शशून्यस्वप्रकाशाखण्डस्वरूपस्य रसस्य रसान्तरेण सह समावेशस्यापि दुर्घटतया कथमङ्गाङ्गिभावः? यतो रसान्तरेषु बहुषु प्राप्तपरिपोषेषु एकस्याङ्गिताया विरुद्धत्वादित्याशङ्कां समाधत्ते—रसान्तरसमावेश इत्यादि। अयं भावः—प्रबन्धेषु प्रथमतरं प्रस्तुतः सन् पुनः पुनरनुसन्धीयमानत्वेन स्थायी यो रसः, तस्य सकलमुखप्रतिमुखादिसन्धिव्यापिनो रसस्य रसान्तरैरन्तरालवर्तिभिर्यः समावेशः, सोऽस्याङ्गितां नोपहन्ति। एतावता 'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। प्रधानस्योपकारे हि तथा भूयसि वर्तते' इति नयेन स्वसामग्रीसमवधानलब्धपरिपोषा अप्यांशिकेतिवृत्तव्यङ्ग्याः स्वप्रकाशत्वं चमत्कारातिशयश्च प्राप्ता अन्ये रसाः स्वयमङ्गिनोऽपि भूत्वा प्रबन्धव्यापकेतिवृत्तव्यङ्ग्यत्वेनाङ्गिभूतस्य प्रास्तुतस्य रसस्योपकारकत्वेनाङ्गतामेव वहन्ति न तु तस्याङ्गित्वं विहन्तीति फलितम्। तदेव दृष्टान्तप्रदर्शनपूर्वकमुपपादयति—'कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते—' इत्यादि। इदमत्र तत्वम्—द्विविधं हि वस्तुरूपमितिवृत्तं भवति, किञ्चिदाधिकारिकं, किञ्चित्प्रासङ्गिकञ्च। तद्विशेषरूपाश्च 'बीजं बिन्दुः पताका च प्रकरी कार्यमेव चे'ति पञ्चार्थप्रकृतयो भवन्ति। तत्र बीजबिन्दुरूपमाधिकारिकं वृत्तं यथा पताकाप्रकरीकार्यात्मकैः

प्रासङ्गिकवृत्तैरवान्तरे ( मध्ये ) क्वचित् क्वचित् सङ्कीर्यते न तु सर्वथा व्याप्यते, तथैव प्रबन्धव्यङ्ग्यतया प्रधानीभूतः प्रस्तुतरस आद्यन्तनिबन्धस्य यत् किञ्चिदंशव्यङ्ग्यै रसैः सङ्कीर्णोऽपि व्याप्तो न भवतीति स्वीयमाङ्गित्वलक्षणं प्राधान्यं न जातु जहाति, प्रत्युत तैरुपक्रियत एवेति न विरोध इति हृदयम्। तदुक्तं वृत्तौ—'सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथाकार्यमेकमनुयायि व्यापकं कल्प्यते, न च तत् कार्यान्तरैर्न सङ्कीर्यते, न च तैः सङ्कीर्णस्यापि तस्य प्राधान्यमपचीयते, तथैव रसस्याप्येकस्य सन्निवेशे क्रियमाणे विरोधो न कश्चित्। प्रत्युत प्रत्युदितविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते।' इति।

(८२) प्रश्नः—'**अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे। परिपोषं न नेतव्यस्तथा स्यादविरोधिता॥' कारिकामिमां सावतरणं व्याख्याय, केऽङ्गरसपरिपोषपरिहारप्रकाराः? इति सोदाहरणं विवेचयत।**

**उत्तरम्**—अथ द्विविधो हि रसयोर्विरोधः, कयोश्चित् सामानाधिकरण्यासहिष्णुत्वेन, कयोश्चिचोन्मूल्योन्मूलकभावेन। तत्र येषां रसानामसामानाधिकरण्यलक्षणो विरोधः—यथा—वीरश्रृङ्गारयोः, श्रृङ्गारहास्ययोः, रौद्रश्रृङ्गारयोः, वीराद्भुतयोः, वीररौद्रयोः, रौद्रकरुणयोः, श्रृङ्गाराद्भुतयोर्वा, तत्र भवतु नामाङ्गाङ्गिभावः। येषां पुनः परस्परं बाध्यबाधकभावस्तेषां कथमङ्गाङ्गिभावः? यथा श्रृङ्गारबीभत्सयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तश्रृङ्गारयोर्वा, एतेषु स्थायिभावयोः परस्परोपमर्दकत्वात्, तथा हि—रतिमुच्छिद्यैव जुगुप्सा, उत्साहमुन्मूल्यैव भयम्, शममुद्धूयैव क्रोधो रतिश्च प्रवर्तन्ते इति व्यक्तं तत्प्रकृतिकरसयोर्बाध्यबाधकभावः। एवञ्चैकत्र समावेशो न विरोधः, विरोधे च नाङ्गाङ्गिभाव इति पूर्वमविरोधकथनं नोचितमित्याशङ्कां समाधत्ते—'अविरोधी विरोधि वा रसोऽङ्गिनि रसान्तरे।' इत्यादि। अयं भावः—अङ्गिनि रसान्तरे श्रृङ्गारादौ प्रबन्धव्यञ्जके सति, अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः, तथाकृते सति विरोधिता निवर्तते इत्यर्थः। अर्थात् परिपुपुषिषितरसेतरं प्रधानतया प्रबन्धेन व्यङ्ग्यं श्रृङ्गारादिरसमनादृत्य तदङ्गिरुद्धस्तद्विरुद्धो वाऽङ्गरसो न ततोऽधिकं पोषणीयः। तथासति प्रधानाप्रधानयो रसयोरविरोधः सम्भवतीति भावः। एतावता प्रधानीभूतरसापेक्षयाऽविरुद्धोऽप्यङ्गभूतो रसस्ततोऽप्याधिकं पुष्यमाणस्तत्समकक्षतया प्रधानरसङ्कक्षामवश्यं प्रच्यावयिष्यति, विरुद्धस्तु नितरामेव, तस्मात् तावानेवाङ्गरसः पोषणीयः, यावताऽङ्गिरसमुपकुर्यात् स्पर्द्धाञ्च न

-पर्ष्टमर्हति। एवमविरुद्धवत् प्रागुक्तो विरुद्धोऽपि परिपोषमनीयमानोऽङ्गरसो न प्रधानं विरोद्धुमीष्टे कदाचिदिति सर्वमनवद्यम्।

अङ्गरसपरिपोषपरिहारप्रकाराश्च त्रयः सन्ति। तत्राविरोधिरसस्याङ्गभूतस्याङ्गि-रसापेक्षयाऽत्यन्तमाधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः। न ह्येतावताऽङ्ग-रसरस्य पोषणमेव निषिध्यते अपि तु अङ्गीभूतरसस्य प्राधान्योपमर्दकमाधिक्यमात्रं व्यवच्छिद्यते इति भावः। तेन 'एकतो रोदिति प्रियाऽन्यतः समरतूर्यनिर्घोषः। स्नेहेन रणरसेन च भटस्य दोलायितं चित्तम्॥' इत्यत्र स्नेहपदप्रतिपाद्यरतिस्थायि-भावकश्रृङ्गारस्य, रणरस-भटपदोपस्थाप्योत्साहस्थायिभावकवीररसस्य च दोलायित-पदबोध्यमुत्कर्षसाम्यमपि न विरोधमावहति। 'कण्ठाच्छित्त्वाऽक्षमालावलयमिव करे हारमावर्तयन्ती······तत्र दृष्ट्वा तु वोऽव्यात्॥' इत्यत्र वा पार्वत्याः सन्ध्याम्प्रति असूयाव्यङ्ग्यविप्रलम्भश्रृङ्गारस्य सपरिकरमन्त्रजपादिव्यङ्ग्यशान्तस्य चोत्कर्षसाम्यं न दोषावहमिति भावः। प्रमदाकृतिं सन्ध्यां शिवः स्वीकृतवान् इति पुरातनीं वार्ता-मनुसृत्य प्रकृतार्थसमन्वयो विधेयः। द्वितीयः परिपोषपरिहारप्रकारो यथा-अङ्गिरस-विरुद्धानां व्यभिचारिणां प्राचुर्येण निवेशनं न विधेयम्। कदाचिदङ्गरसास्वादानुरोधेन प्राचुर्येण निवेशनेऽपि प्रधानरसपोषकव्यभिचारिणां शीघ्रमेवानुसन्धानं विधेयम्, येन तदास्वादप्रकर्षापचयो न स्यात्। उदाहरणन्तु 'कोपात् कोमललोलबाहुलतिका-पाशेन बद्धा दृढम्···' इत्यत्र प्रधानीभूतश्रृङ्गारस्थायिरतिप्रतिकूलस्य अङ्गभूतरौद्र-स्थायिक्रोधपोषकसञ्चार्यमर्षस्य 'बद्धा दृढम्' इत्यादिना प्राचुर्येण निवेशेऽपि सत्वरमेव 'रुदत्या हसन्' इत्यादिना रत्यनुकूलेर्ष्यौत्सुक्यहर्षानुसन्धानं विहितमिति न प्रधान-रसस्वादापकर्षः। तृतीयः परिपोषपरिहारप्रकारो यथा-परिपोषं नीयमानस्यापि अङ्गभूतस्य रसस्याङ्गत्वेन पुनः पुनः प्रत्यवेक्षणम्। तदुक्तं—'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्' इति। यथा तापसवत्सराजे-वत्सराजोदयनस्य पद्मावतीविष-यकसम्भोगश्रृङ्गार इहोदाहरणम्। अनया रीत्या प्रधानरसस्याविरोधिनां विषये परिहारप्रकारानभिधाय विरोधिनां विषये दोषपरिहारः प्रतिपाद्यते-विरोधिनस्त्वङ्ग-भूतस्य रसस्याङ्गिरसापेक्षया न्यूनता सम्पादनीया। न्यूनो ह्यङ्गभूतो रसः प्रधान-मङ्गिनं रसं बाधितुं न शक्नुयात्। यथा-शान्तेऽङ्गिनि श्रृङ्गारस्य, श्रृङ्गारे वा शान्तस्य न्यूनता सम्पादनीया। परिपोषरहितस्य कथं रसत्वमिति तु न शङ्कनीयम्? अङ्गि-रसापेक्षयैव न्यूनत्वस्यामिधित्सितत्वात्। अर्थात् अङ्गिनो हि रसस्य यावान् परि-

पोषः, तावान् तस्य परिपोषो न विधेय इत्येव तात्पर्यम्, स्वगतस्तु सम्भविपरिपोषो न निराक्रियतेऽस्माभिरिति भावः। अङ्गिरसाप्रतिकूलेऽङ्गरसपरिपोषे न नो विद्वेष इति हृदयम्। तथा च वृत्तावुपसंहारः–'एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य बहुरसेषु प्रबन्धेषु रसानामङ्गाङ्गिभावमनभ्युपगच्छताऽप्यशक्यप्रतिक्षेपमित्यनेन प्रकारेण विरोधिनामविरोधिनाञ्च रसानामङ्गाङ्गिभावेन समावेशे प्रबन्धेषु स्यादविरोधिता।' इति।

**(८३) प्रश्नः—'विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत्। स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता'॥ एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्। रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा॥' सोपक्रममिमे कारिके व्याख्याय शान्तस्य दयावीरादिभिन्नरसत्वस्वीकारे किं प्रमाणमिति सयुक्तिकं ब्रूत।**

**उत्तरम्**—पूर्वोक्तरीत्याऽविरोधिनां विरोधिनाञ्च प्रबन्धस्थेनाङ्गिना रसेन समावेशे साधारणतयाऽविरोधोपायं प्रतिपाद्य सम्प्रति विरोधिविषये विशेषरूपेणाविरोधोपायं प्रतिपादयितुमाह—'विरुद्धैकाश्रयो यस्तु....' इत्यादि। अयं भावः—द्विविधो हि विरोधी भवति, ऐकाधिकरण्यविरोधी, नैरन्तर्यविरोधी च। तत्र प्रबन्धस्थेन स्थायिनाऽङ्गिना रसेनौचित्यापेक्षया विरुद्धैकाश्रयो यो विरोधी, यथा वीरेण भयानकः, स विभिन्नाश्रयः कार्यः। अर्थात् तस्य वीरस्य य आश्रयः कथानायकः, तद्विपक्षविषये स सन्निवेशनीयः, तथासति च तस्य विरोधिनोऽपि यः परिपोषः, स निर्दोषो भवति। विपक्षविषये हि भयातिशयवर्णने नायकस्य नीतिपराक्रमादिसम्पत् सुतरां समुज्जृम्भते एवं न त्वपचीयते इति भावः। इदमत्र तत्वं–यथा वीरः स्थायी भयानकेन सहैकाश्रये स्थातुमक्षमः, उत्साहभीत्योरेकाधिकरण्यासम्भवात्। अतः प्रबन्धेषु नायके वीरः प्रतिनायके च भयानको वर्णनीयः। इत्थञ्च प्रतिपक्षिणोभयेन नेतुर्वीरोचितनीतिपराक्रमयोरुत्कर्ष एव व्यज्यते नापकर्ष इति व्यधिकरणो विरोध्यपि भयानको वीरस्य पोषकः, तेन पोषकस्य तस्य परिपोषेऽपि स्थायिनो वीररसस्य न हानिरिति बोध्यम्। यथा अर्जुनचरिते–अर्जुनस्य पातालावतरणप्रसङ्गे पातालनिलयानां प्रतिपक्षिणां–'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनः। महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम्॥' इत्यादिना भीतिवर्णनेनार्जुनस्य नेतुर्वीरत्वं प्रकृष्यत एव न त्वपकृष्यत इति भावः। अथ नैरन्तर्यविरोधिनो विरोधं परिहर्तुं

प्रतिपादयति-'एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्...'इत्यादि। अयं भावः-यः पुनरेकाधिकरणत्वे न विरोधशाली, अपि तु नैरन्तर्ये विरोधवान्, स रसान्तरव्यवधानेन प्रबन्धे निवेशनीयः। अर्थात् ययोर्हि रसयोरव्यवधानेन निवेशने एव विरोधः, तयोर्मध्ये कश्चनोभयानुकूलो रसो विरोधनिवृत्तये निवेशनीयः। यथा नागानन्दे जीमूतवाहनस्य नायकस्य मुखसन्धितो निर्वहणसन्धिपर्यन्तं शान्तस्य, तद्विरुद्धस्य मलयवतीविषयकानुरागमूलशृङ्गारस्य च मध्ये 'अहो गीतम्' 'अहो वादित्रम्' इत्यपसरोगीतप्रशंसनोभयानुकूलोऽद्भुतो रसः सन्निवेशित इति। ननु शान्तस्य रसस्य सत्वे न किञ्चित्प्रमाणम्, तस्य सकलसहृदयानुभवगोचरत्वाभावात्, 'तत्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्' इत्यभियुक्तोक्तेस्तत्त्वज्ञानादिजन्यात्मावज्ञानलक्षणनिर्वेदस्थायिभावकत्वेनास्वाद्यत्वाभावात्, सत्त्वेऽपि धार्मिकभावप्राधान्येन दयावीर एवान्तर्भावसम्भवाच्चेति चेदत्रोच्यते-सर्वविधसांसारिकविषयतृष्णाक्षयसुखात्मकस्वमात्रविश्रान्तिजन्याह्लादविशेषरूपशान्तरसस्य सहृदयैरनुभूयमानस्यापलपितुमशक्यत्वात्। तदुक्तं-'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥' इति। अथ यद्यस्ति शान्तोऽपि रसस्तर्हि कथं न सर्वैः सहृदयैः शृङ्गारादिवदनुभूयते इति चेन्मैवम्, सर्वसहृदयानामास्वाद्यत्वाभावेऽपि कतिपयानामेव परमभागधेयानामास्वाद्यतया तस्य प्रतिक्षेपासम्भवात् यतो यः सर्वानुभवविषयो न भवति, स नास्त्येवेति वक्तुं न पार्यते, तथासति सर्वानुभवागोचरस्येश्वरस्याप्यसत्त्वं प्रसज्येत। तथा च सिद्धः शान्तो रसः। तदुक्तं-'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः॥' न च पारमहंस्यदशामात्रानुभवनीयस्य सुखाद्यतिरिक्तस्य सञ्चार्यादिसम्मेलनानर्हत्वात् तद्रहितस्य शान्तस्यास्वादविरहाच्च रसत्वमिति वाच्यम्? शान्तस्वभावैः पारमहंस्यातिरिक्तदशायामप्यनुभाव्यत्वात्। सुखाभावकथनस्य वैषयिकसुखाभावपरत्वेनोक्ततृष्णाक्षयसुखरूपतायास्तस्याक्षतत्वात्। परमात्माद्यालम्बन-पुण्याश्रमाद्युद्दीपन-रोमाञ्चाद्यनुभाव-हर्षादिसंचारिभावसम्मेलनस्य सद्भावाच्च। तदुक्तं-'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिर्न विरुद्धा॥' इति। न च तस्य दयावीरेऽन्तर्भावः कर्तुं शक्यस्तस्य दयावीरस्याभिमानमयत्वेन व्यवस्थापनात्। अस्य च शान्तरसस्य सर्वविधाहङ्कारनिवृत्तिरूपेण विजृम्भमाणत्वात्, तदुक्तं-'निरहङ्काररूपत्वात् दयावीरादिरेष नो॥' इति। इतरथा त्वीदृग्विधविशेषस्य सत्त्वेऽपि यद्यैक्यं परिकल्प्यते तर्हि वीररौद्रयोरपि ऐक्य-

कल्पनापत्तिः स्यात्, तस्मात् दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वथा अहङ्कार-रहितत्वे शान्तरसप्रभेदत्वं न तु शान्तस्यैव तत्रान्तर्भावः। अन्यथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद् विरोधः। तस्य तु शान्तस्य—'स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः। पुनर्निमित्तापाये तु शान्त एव प्रलीयते॥' इति निष्कण्टकः पन्थाः।

(८०) प्रश्नः—**'अवधानातिशयवान् रसे तत्रैव सत्कविः। भवेत् तस्मिन् प्रमादो हि झगित्येवावभासते॥' 'विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा। तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति॥' कारिके इमे सोपक्रमं व्याख्याय, 'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः। किन्तु मत्ताऽङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥' इति पद्ये कथं नितान्तविरुद्धयोरपि शान्तशृङ्गारयोरेकत्र स्थितिः।**

**उत्तरम्**—इतः पूर्वं 'विरोधमविरोधञ्च सर्वत्रेत्थं निरूपयेत्। विशेषतस्तु शृङ्गारे सुकुमारतरो ह्यसौ' इति कारिकया यथोक्तलक्षणानुसारेण सहृदयः कविः प्रबन्धेऽन्यत्र च सर्वेषु रसेषु विरोधाविरोधौ निरूपयेत्। विशेषतस्तु शृङ्गारे, स हि रतिपरिपोषात्मकत्वात्, रतेश्च स्वल्पेनापि निमित्तेन भङ्गसम्भवात्, सुकुमारतरो ह्यसौ सर्वेभ्यो रसेभ्यो मनागपि विरोधिसमावेशं न सहते इत्युक्तम्। अतः प्रकृतकारिकयाऽपि शृङ्गारमुद्दिश्यैव कविं चेतयते—अवधानातिशयवान् इत्यादि। अयं भावः—यतो हि तस्मिन्नेव शृङ्गारे रसे सर्वेभ्योऽपि रसेभ्यो नितरां सौकुमार्यातिशययोगिनि कविरवधानवान् प्रयत्नशाली भवेत्। तत्र हि प्रमादतस्तस्य सहृदयमध्ये झटित्येवावज्ञाविषयता भवति। किञ्च शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः परमकमनीयतया प्रधानभूतः। यतो न हि समेषामपि प्राणिनां प्रायेण शमादीनामनुभवो दरीदृश्यते। क्वचित्कश्च नैव प्राधान्यावहो भवितुमर्हति। शृङ्गारस्थायिरतेरनुभवस्त्वाकीटपतङ्गतु रङ्गकुरङ्गविहङ्गमातङ्गादिदेवदानवमानवपर्यन्तं यथास्वं भवत्येवेति शृङ्गारस्य प्राधान्यमक्षुण्णमिति भावः। तथा च शृङ्गारस्य परमकमनीयत्वेन सर्वानुकूल्ये सति तद्विषये विशेषं निर्वक्तुमाह—'विनेयानुन्मुखीकर्तुमि'त्यादि अयं भावः—शृङ्गाराङ्गाणां विभावादीनां शृङ्गारादिविरुद्धस्य रसस्य' सम्पर्कः पूर्वकथितपरिपोषपरिहारलक्षणाविरोधोपायेनैव केवलं न दुष्यति इति न, अपि तु विनेयान् शिष्यान् सुकुमारमतीन् राजकुमारादीन् उन्मुखीकर्तुं सदुपदेशग्रहणाय गुडजिह्विकयाऽभिमुखीकर्तुं, काव्यस्य शोभार्थं शृङ्गारव्यञ्जनेन विच्छित्तिविशेषं जनयितुं च सम्पादमानः स न दुष्यति, नैव

दोषावायको भवति। यतो हि शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो विनेयास्तनन्दं विनोदेरां पृच्छन्ति। तदुक्तं—स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते। प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥' इति। तथा च न हि काव्यं केवलं सहृदयमनोविनोदमात्रफलकम्, अपि तु मनोरमैः शब्दैः कान्तेव भङ्गिविशेषेण सदर्थमप्युपदिशति। तदुक्तं वृत्तौ—'सदाचारोपदेशरूपा हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारितेति'। अत एव शृङ्गारस्य सकलजनमनोऽभिरामत्वात् तदङ्गसमावेशः काव्यशोभातिशयं पुष्यतीति अनेनापि प्रकारेण विरोधिरसे शृङ्गाराङ्गसमावेशो न दोषाय कल्पते। यथा–'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः। किन्तु मत्ताङ्गनाऽपाङ्गभङ्गलोलं हि जीवितम् ॥' इत्यत्र शृङ्गारविरुद्धशान्तरसे शृङ्गाराङ्ग विभावादिसमावेशेऽपि न कोऽपि विरोधः समापतति। तथा हि–अयम्भावः ललनाजनानां सम्पदां च रमणीयणत्वमहमपि अनुमन्ये, किन्तु मनुष्यजीवनं यदि चिरस्थायि स्यात्तदैव तदुपभोगः सम्यक् सम्भवेत्, परन्तु तदेव न स्थिरमिति ततो मन आकृष्य परमात्मचिन्तनमेवासञ्जनीयमिति। तथा चात्र जीवनास्थैर्यनिर्वेदनरूपशान्तविभावं, रामा इति शृङ्गारालम्बनविभावः, विभूतय इति तदुद्दीपनविभावश्च तद्विरुद्धावपि पोषयतः, पर्यन्ते शान्तरसस्यैव सहृदयानां विश्रान्तिधाम तयाऽऽस्वाद्यमानत्वात्। मत्ताङ्गनाऽपाङ्गभङ्गलोलमिति पदमपि यथाकथञ्चित् शृङ्गारं द्योतयत् जीवनास्थैर्यातिशयबोधनद्वारा शान्तमेवोपकरोति। एतावता काव्ये विनेयोन्मुखीकरणकारी महीयान् शोभाप्रकर्षो भवतीति शान्तशृङ्गारयोरत्र न विरोध इति तत्त्वम्।

(८२) प्रश्नः—**रसादीनामितिवृत्तादिभिः समं जीवशरीरभाव एव न गुणगुणिभाव इत्यत्र का वाऽऽयुक्तिरिति विशदं विविच्य, वाच्यव्यङ्ग्ययोरेककालावच्छेदेनाभिव्यक्त्यैव प्रतीतिसम्भवे वाच्याद्व्यङ्ग्यस्यातिरिक्तस्वीकारे का युक्ति? इति सप्रपञ्चमुदञ्चयत।**

**उत्तरम्**—ननु रसादीतिवृत्तयोर्जीवशरीरव्यवहारस्तदा स्यात् यदि रसादिभिः पृथग्भूतमपि वाच्यार्थरूपमितिवृत्तं क्वचिदुपलभ्येत, न तु तथोपलभ्यते, रसाद्यतिरिक्तस्यैवेतिवृत्तस्य सर्वत्रोपलम्भात्। शरीरन्तु निधनान्तरं जीवात्पृथगप्युपलभ्यते इति न कथमपि तयोर्जीवशरीरव्यवहारः समुचितः, अपि तु गुणगुणिव्यवहार एव समुचितः प्रतिभाति, तथाहि–यथा रूपादिगुणेभ्यः पृथग्भूतस्य गुणिनो द्रव्यस्य नोपलम्भस्तथैव रसादिभ्योऽतिरिक्तस्येतिवृत्तस्यात्यन्तामिश्रणेन पृथक्तयाऽनुभवा-

भावादिति चेदत्रोच्यते—यदि रसादिमयमेव वाच्यं स्यात्, यथा गौरत्वमयं शरीरं तर्हि यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वजनस्य, तथा वाच्येन सहैव रसादयोऽपि सहृदयासहृदयसाधारणस्य प्रतिभासेरन्, न च तथा प्रतिभासन्ते सहृदयस्यैव वेद्यत्वात्, तस्मान्न गुणगुणिभावस्तयोरिति तात्पर्यम्। न च रत्नानां जात्यत्वमिव वाच्यानां रसादिमयत्वमपि प्रतिपत्तृविशेषसंवेद्यमेव स्यात् अर्थात् यथा रत्नानां जात्यत्वं रत्नानि जानद्भिरपि सर्वैर्न ज्ञायते, अपि तु वैकटिकैर्व प्रतिपत्तृविशेषज्ञेन परिचीयते, तथैव प्रकृतेऽपि वाच्यस्य भवेत् सर्वेषां ज्ञानं, रसादिमयत्वस्य तु वाच्यधर्मत्व ज्ञानं सहृदयस्यैव प्रतिपत्तृविशेषस्य स्यादिति गुणगुणिभावकल्पनेऽपि न कोऽपि दोष इति वाच्यम्? जात्यत्वेन प्रतिभासमाने रत्ने जात्यत्वस्य रत्नस्वरूपानतिरिक्तत्वस्य लक्षणात्मत्वेऽपि रसादीनां विभावानुभावादिरूपवाच्यानतिरिक्तत्वेन लक्ष्यमाणत्वाभावात्। न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यापि सहृदयस्यावगमो भवति। अत एव विभावादि प्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात् क्रमोऽवश्यं भावी, स तु शैघ्र्यान्न लक्ष्यते इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादय इति। तस्मात् न गौरत्वादिरूपवद्, रत्नवत्, सर्वेषां तत्प्रतीतिप्रसङ्गात्। नवा रत्नस्य जात्यत्ववच्च स्वीकर्तुं योग्या, वाच्यविभावाद्येकरूपतापातात् किन्तु विभावादिप्रतीतिप्रयोज्यत्वादत्यन्तं लोकोत्तरचमत्कारशालिन एव ते रसा इति जीवशरीरभाव एव तेषामितिवृत्तैः सहेति हृदयम्। न तु गुणगुणिभाव इति भावः। न चैवं वाच्यव्यङ्ग्ययोर्भेदे सिद्धेऽपि तत्प्रतीत्योः क्रमः कलयितुं न शक्यते, तयोर्यौगपद्येनैव क्वचिदुद्भवात्। एवञ्च किमिति व्यञ्जनाव्यापारोऽप्यतिरिक्तः स्वीक्रियते, अभिधाव्यापारेणैव प्रकरणादिसाहाय्येन युगपदुभयोः प्रतीतिसम्भवात्। न च वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभाव एव क्रमकल्पक इति वाच्यम्? गीतादिशब्दमात्रजन्यरसादिप्रतीतिस्थले वाच्यप्रतीतिव्यभिचारेण वाच्यव्यङ्ग्यप्रतीत्योः क्रमकल्पककार्यकारणभावस्य वक्तुमशक्यत्वात् तथा हि कियन्तो गीतशब्दा वाच्यार्थबोधनं विनापि स्वरादिविशेषबलेनैव रसान् बोधयन्तीति कारणाभावप्रयोज्यकार्याभावाभावरूपव्यतिरेकव्यभिचारस्य जागरूकत्वादिति वाच्यम्? गीतादिषु शब्दश्रवणानन्तरमेव व्यङ्ग्यरसादिप्रतीतिस्थले शब्दस्यैव कारणत्वेऽपि काव्येषु शब्दतो वृत्तिज्ञानजन्योपस्थित्यादिभिर्वाच्यार्थबोधानन्तरमेव रसादिप्रतीतेर्जायमानत्वेनानायत्या शब्दजन्यवाच्यार्थबोधस्यैवान्वयव्यतिरेकाभ्यां ताम्प्रति कारणतायाः कल्पनीयत्वात्। तथा च काव्येषु वाच्यार्थप्रतीतिमन्तरा नैव क्वापि व्यङ्ग्यरसादिप्रतीति-

रिति नास्मिन् कार्यकारणभावे कश्चनापि व्यभिचारः। तथासति क्रमोऽपि स्वीकरणीय एव भवतीति तन्निर्वाहकतयैव व्यञ्जनाया आवश्यकत्वमिति भावः। न चैवं स क्रमोऽत्र कुतो न लक्ष्यते इति वाच्यम्? वाच्यप्रतीत्यविलम्बेनैव व्यङ्ग्यप्रतीतेरुद्भवात् कमलदलशतव्यतिभेदवत् सूक्ष्मक्रमसत्त्वेऽपि तस्य लक्षयितुमशक्यत्वात्, तावता न क्रमोऽस्त्येव न हीति वक्तुं न पार्यते इति भावः। यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्, तर्हि अनवधारितप्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां काव्यमात्रश्रवणादेव व्यङ्ग्यरसादिप्रतीतिः स्यात्, न च तथा भवति, तस्मात् काव्यजव्यङ्ग्यरसादिप्रतीतौ वाच्यप्रतीतेः कारणत्वमवश्यं स्वीकरणीयम्। अन्यथोभयोः सहभावे वाच्यप्रतीतेरनुपयोगः। उपयोगे वा न सहभावः। किञ्च येषामपि गीतादिशब्दानां स्वरूपविशेषप्रतीतिनिमित्तं रसादिव्यञ्जकत्वं तेषामपि स्वरूपप्रतीतेर्व्यङ्ग्यरसादिप्रतीतेश्च नियतभावी क्रमोऽवश्यं स्वीकर्तव्यः। तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभावात् पौर्वापर्यक्रमो नियत एवेति भावः।

(८६) प्रश्नः—**अभिधयैव रसादिबोधसम्भवे तया व्यञ्जनायाः कथं न गतार्थत्वमिति सविशदं निरूपयत।**

**उत्तरम्**—ननु किमिदं व्यञ्जकत्वम्? यदि व्यङ्ग्यार्थबोधजनकत्वमेव व्यञ्जकत्वम्, व्यङ्ग्यत्वञ्च व्यञ्जकजन्यबोधविषयत्वं तर्हि व्यङ्ग्यव्यञ्जकत्वग्रहयोः परस्परसापेक्षत्वेनान्योन्याश्रयात् व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वं, व्यङ्ग्यसिद्ध्यधीना च व्यञ्जकत्वसिद्धिरित्यव्यवस्था समापतति। न च वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धेः पूर्वं प्रतिपादितत्वेन न व्यङ्ग्यत्वग्रहे व्यञ्जकत्वग्रहापेक्षेति केवलं व्यञ्जकत्वज्ञानमात्रे व्यङ्ग्यत्वज्ञानस्यैवापेक्षितत्वेनैकतरमात्रापेक्षणान्नान्योन्याश्रयदोषः सम्भवतीति वाच्यम्? प्रागुक्तयुक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिसम्पादनेऽपि तस्यार्थस्य व्यङ्ग्यत्वेन व्यपदेशे प्रमाणाभावात्। यत्र च प्राधान्येनावस्थानं, तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः, वाचकत्वस्य तत्परत्वात्। अतश्च तत्प्रकाशिनो वाक्यस्याभिधात्मकवाचकत्वमेव व्यापारः किं तस्य व्यापारान्तरकल्पनया? अर्थात् यथाऽभिधात एव प्रागुत्पन्ना पदार्थोपस्थितिः पश्चात्तनं भाविनं वाक्यार्थबोधमुपकरोति, तथैवाभिधाबलात् पूर्वोत्पन्नः प्रथमवाच्यार्थबोधस्तदुद्भूतमेव पश्चाद्भाविनं द्वितीयवाच्यार्थबोधमुपकुर्यादित्येवं तत्प्रतीत्योः कार्यकारणभावनिर्वाहे सिद्धे किमिति व्यञ्जनावृत्तिरभिनवा कल्प्येतेति चेदत्रोच्यते—यत्र 'गतोऽस्तमर्कः' इत्यादौ शब्दः स्वार्थमभिदधानोऽर्था-

रिति नास्मिन् कार्यकारणभावे क्वचनापि व्यभिचारः। तथासति क्रमोऽपि स्वीकरणीय एव भवतीति तन्निर्वाहकतयैव व्यञ्जनाया आवश्यकत्वमिति भावः। न चैवं स क्रमोऽत्र कुतो न लक्ष्यते इति वाच्यम् ? वाच्यप्रतीत्यविलम्बेनैव व्यङ्ग्यप्रतीतेरुद्भवात् कमलदलशतव्यतिभेदवत् सूक्ष्मक्रमसत्त्वेऽपि तस्य लक्षयितुमशक्यत्वात्, तावता स क्रमोऽस्त्येव न हीति वक्तुं न पार्यते इति भावः। यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्, तर्हि अनवधारितप्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां काव्यमात्रश्रवणादेव व्यङ्ग्यरसादिप्रतीतिः स्यात्, न च तथा भवति, तस्मात् काव्यजव्यङ्ग्यरसादिप्रतीतौ वाच्यप्रतीतेः कारणत्वमवश्यं स्वीकरणीयम्। अन्यथोभयोः सहभावे वाच्यप्रतीतेरनुपयोगः। उपयोगे वा न सहभावः। किञ्च येषामपि गीतादिशब्दानां स्वरूपविशेषप्रतीतिनिमित्तं रसादिव्यञ्जकत्वं तेषामपि स्वरूपप्रतीतेर्व्यङ्ग्यरसादिप्रतीतेश्च नियतभावी क्रमोऽवश्यं स्वीकर्तव्यः। तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभावात् पौर्वापर्यक्रमो नियत एवेति भावः।

(८६) प्रश्नः—अभिधयैव रसादिबोधसम्भवे तया व्यञ्जनायाः कथं न गतार्थत्वमिति सविशदं निरूपयत।

**उत्तरम्**—ननु किमिदं व्यञ्जकत्वम् ? यदि व्यङ्ग्यार्थबोधजनकत्वमेव व्यञ्जकत्वम्, व्यङ्ग्यत्वञ्च व्यञ्जकजन्यबोधविषयत्वं तर्हि व्यङ्ग्यव्यञ्जकत्वग्रहयोः परस्परसापेक्षत्वेनान्योन्याश्रयात् व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वं, व्यङ्ग्यसिद्ध्यधीना च व्यञ्जकत्वसिद्धिरित्यव्यवस्था समापतति। न च वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धेः पूर्वं प्रतिपादितत्वेन न व्यङ्ग्यत्वग्रहे व्यञ्जकत्वग्रहापेक्षेति केवलं व्यञ्जकत्वज्ञानमात्रे व्यङ्ग्यत्वज्ञानस्यैवापेक्षितत्वेनैकतरमात्रापेक्षणान्नान्योन्याश्रयदोषः सम्भवतीति वाच्यम् ? प्रागुक्तयुक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिसम्पादनेऽपि तस्यार्थस्य व्यङ्ग्यत्वेन व्यपदेशे प्रमाणाभावात्। यत्र च प्राधान्येनावस्थानं, तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः, वाचकत्वस्य तत्परत्वात्। अतश्च तत्प्रकाशिनो वाक्यस्याभिधात्मकवाचकत्वमेव व्यापारः किं तस्य व्यापारान्तरकल्पनया ? अर्थात् यथाऽभिघात एव प्रागुत्पन्ना पदार्थोपस्थितिः पश्चात्तनं भाविनं वाक्यार्थबोधमुपकरोति, तथैवाभिधावलात् पूर्वोत्पन्नः प्रथमवाच्यार्थबोधस्तदुद्भूतमेव पश्चाद्भाविनं द्वितीयवाच्यार्थबोधमुपकुर्यादित्येवं तत्प्रतीत्योः कार्यकारणभावनिर्वाहे सिद्धे किमिति व्यञ्जनावृत्तिरभिनवा कल्प्येतेति चेदत्रोच्यते—यत्र 'गतोऽस्तमर्कः' इत्यादौ शब्दः स्वार्थमभिदधानोऽर्थो-

स्येव, किन्त्वभिधामात्रबोध्यत्वं वाच्यत्वं तत्र दुर्लभम्, अभिधेतरव्यञ्जनाजन्यबोधविषयत्वस्यापि तत्र सत्वात्। तस्मात् शब्दान्तरेण स्वशक्यार्थवाचकेन यदर्थान्तरस्य व्यङ्ग्यस्य बोधनम् तद्व्यञ्जनाया एव माहात्म्यमिति भावः।

(८७) प्रश्नः—**तात्पर्यशक्त्यैव रसादिबोधसंभवे तथा व्यञ्जनायाः कथं न गतार्थत्वमिति सयुक्तिकं ग्रन्थोक्तदिशा निरूपयत।**

**उत्तरम्**—ननु यथा पदार्थप्रतीतिपूर्विकैव वाक्यार्थप्रतीतिर्भवति, सा च वाच्यार्थप्रतीतिस्तात्पर्यशक्त्यैव निष्पद्यते, तथैव वाच्यार्थप्रतीतिपूर्वकमेव व्यङ्ग्यार्थप्रतीतेर्जायमानत्वेन प्रकृतेऽपि तात्पर्यशक्त्यैव व्यङ्ग्यार्थबोधसंभवेन तदर्थं व्यञ्जनाया नावश्यकतेति चेदत्रोच्यते-दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्येण वाच्यव्यङ्ग्ययोः पदार्थवाक्यार्थन्यायस्य वक्तुमशक्यत्वात्। अयं भावः-यत् पूर्वं 'पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः' इति तात्पर्यविषयस्य वाच्यत्वं स्थापयता दृष्टान्त उपन्यस्तः, स असङ्गतः पदार्थप्रतीतेः सर्वैरस्वीकारात्। स्वीकृतावपि तस्याः पारमार्थिकतयाऽननुभवनात्। तथा मननेऽपि युक्तिभूतकवैयक्त्यस्योपलम्भात्। तथा हि—यतः पदार्थप्रतीतिरस्त्येवेति कैश्चिद्वैयाकरणैरेवास्थितम्, न तु सर्वैः। तैरपि पारमार्थिकी न मन्यते किन्तु वाक्यार्थबोधार्थमेव काल्पनिकी लाघवेनावान्तरे स्वीक्रियते। यैरपि मीमांसकैः काल्पनिकत्वमस्यानाङ्गीक्रियते, तैरपि वाक्यार्थपदार्थयोर्घटकपालन्यायोऽभ्युपगन्तव्यः। यथा हि घटे निष्पन्ने तदुपादानकारणानां कपालानां न पृथगुपलम्भः, तथैव वाक्ये तदर्थे वा प्रतीते पद-तदर्थानां न पृथगुपलम्भः। वाक्यार्थबोधनिष्पत्तिकाले हि पद-तदर्थानां पृथक्तयोपलम्भे वाक्यार्थबुद्धिरेव व्याहन्येत। अवयवेषु पृथक्कृतेषु नावयविनः पृथगुपलब्धिर्भवति, प्रकृते तु वाच्यव्यङ्ग्ययोर्नैष न्यायः संघटते, न हि व्यङ्ग्ये प्रतीयमाने वाच्यार्थबुद्धिर्दूरीभवति, वाच्यावभासाविनाभावेनैव व्यङ्ग्यार्थस्य प्रकाशनात्। तस्मात् वाच्यव्यङ्ग्यप्रतीत्योः प्रदीपघटन्याय एव दृष्टान्ततयोपन्यसनीयः। यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायामपि न प्रदीपप्रकाशो निवर्तते, तथैव व्यङ्ग्यप्रतीतौ सत्यामपि न वाच्यावभासो निवर्तते, तेन च व्यङ्ग्यव्यञ्जकभाव एव वाच्यव्यङ्ग्ययोः पर्यवस्यति। न च स्वयमेव प्रथमोद्द्योते—'यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते। वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः'॥ इत्यनेन तयोः पदार्थवाक्यार्थन्यायं स्वीकृत्य सम्प्रति तन्निरसनं नोचितमिति वाच्यम्? उपायत्वसाम्यमात्रविवक्षयैव तथोक्तत्वात्। अर्थात् तत्र कारणत्वमात्रेण सामान्येनैव साम्यमुक्तम्, न तु समवाय्यादिकारणविशेषत्वेन, कारणत्वमात्रेण साम्यन्त्वधुनापि

प्रतिपाद्यत इति न किञ्चिदपि दूषणमिति भावः । न चैवमपि घटप्रदीपन्यायस्तयोर्न सङ्गतः । तथाहि यथा युगपदेव घटप्रदीपयोर्ज्ञानं भवति, तथैव वाक्यतः सममेव वाच्यव्यङ्ग्ययोरवभासः स्यात् तथा च वाक्यस्य युगपदर्थद्वयबोधकत्वापत्तिः प्रसज्येत, तथासति तस्य वाक्यतैव विघटेत, ऐकार्थ्यलक्षणस्यैव वाक्यत्वाङ्गीकारादिति वाच्यम् ; तयोर्हि वाच्यव्यङ्ग्ययोर्गुणप्रधानभावेनावस्थानस्याङ्गीकारेणादोषात् । तथा हि-क्वचिद्व्यङ्ग्यस्य प्राधान्यं, वाच्यस्योपसर्जनत्वम् ; क्वचिच्च वाच्यस्यैव प्राधान्यं व्यङ्ग्यस्य गुणीभावः । तथा च गुणप्रधानभावेनैव तयोः परस्परमन्वयान्न वाक्यताया भङ्गप्रसङ्ग इति भावः । किञ्च तात्पर्यरूपातिनिर्व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावन्नास्त्युपपन्नम्, शब्दस्य तदर्थबोधनेच्छयाऽनुच्चरितत्वात् । अर्थात् प्राधान्येन विवक्षित एवार्थः शब्दस्य तात्पर्यविषयो भवतीति भवदभिमतः तात्पर्य-शक्तिरभिधातुमलं स्यात् ; अत्र तु व्यङ्ग्यस्य तथात्वाभावात् कथं वाच्यत्वं स्यात् । एतावताऽभिधैव तात्पर्यसाहाय्येन बोधं जनयतीति तन्मतम्, अतो वाच्यत्वमेव तैराशङ्कितम्, खण्डितं च तदेवालङ्कारिकैरिति विभावनीयम् । तस्मात् तुल्ययुक्त्या व्यङ्ग्यस्य प्राधान्येन विवक्षास्थलेऽपि व्यङ्ग्यस्य वाच्यातिरिक्तत्वेन स्वरूपं नापह्नोतुं शक्यते कथमपि भवद्भिरपि । अर्थात् प्राधान्येनाविवक्षायां व्यङ्ग्यसद्भावो मीमांसकैरपि स्वीकृत एवेति तदर्थं व्यञ्जनाभारो यदि तैर्वोढव्य एव, तदा प्राधान्येन विवक्षायां स भारो न कथमूह्यते इति महच्चित्रमिति भावः ।

( ८८ ) प्रश्नः—**लक्षणया व्यञ्जनाया गतार्थत्वं सोपक्रमं निरसनीयम् ।**

**उत्तरम्**—ननु लक्षणा हि वृत्तिः शुद्धा, गौणी चेति द्विविधा । तत्र शुद्धाया लक्षणाशब्देन व्यवहारः, गौण्यास्तूपचारशब्देन । परन्तु तदुभयोरप्रधानवृत्तित्वात् गुणवृत्तिशब्देन व्यवहारो भवति । सा चार्थे साक्षात्, शब्दे तु परम्परयाऽऽरोपिता तिष्ठति । एवञ्च शब्दार्थोभयवृत्तित्वेन साम्यात् गुणवृत्तिव्यञ्जनयोरैक्यं कथं नेति चेन्मैवम्, तयोः स्वरूपविषयभेदेनैक्यस्य वक्तुमशक्यत्वात् । तथाहि रूपभेदस्तावदयं, यदमुख्यतया व्यापारो गुणवृत्तिर्लक्षणा नाम प्रसिद्धा, व्यञ्जना तु मुख्यतयैव शब्दव्यापारः, न हि वाच्यार्थाद् रसादिवस्त्वलंकाररूपव्यङ्ग्यत्रयप्रतीतेरमुख्यत्वं मनागपि लक्ष्यते । अर्थात् लक्षणा बाधसध्रीचीना वाच्यार्थे बाधिते तत्सम्बन्धिनोऽर्थान्तरस्य बोधिकेति तद्बोध्योऽर्थोऽमुख्य एव, व्यञ्जना तु न तादृशीति तत्प्रत्येयोऽर्थस्तु मुख्य एवेति तयोः स्वरूपभेदः स्फुट एवेति भावः, अयञ्चान्यो रूपभेदः—यद् गुणवृत्तिरमुख्यत्वेन व्यवस्थितमभिधात्मकवाचकत्वमेवोच्यते । व्यञ्जना तु वाच-

कत्वादत्यन्तं विभिन्नैव । अयमाशयः—'सति तात्पर्ये सर्वे सर्वार्थवाचकाः' इति नयेनाप्रसिद्धशक्तिनाम्नाऽभिधैव व्यवहितार्थबोधकतया लक्षणामुपिक्षमुपैतीति तद्वदेव लक्षणाया अभिधाविशेषरूपत्वाद् व्यञ्जनायाश्च ततो नितरां भिन्नत्वान्न तादात्म्यं कथञ्चित् संभवतीति भावः । अयञ्चापरः स्वरूपभेदः—यदा गुणवृत्तौ पदार्थोऽर्थान्तरमुपलक्षयति, तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते । यथा—'गङ्गायां घोषः' इत्यादौ प्रयोजनहेतुकलक्षणलक्षणायां वाच्यभूतं नीरं लक्ष्यतीरान्वयसिद्धये 'परार्थे स्वसमर्पणम्' इत्युक्तेः स्वरूपं लक्ष्यात्मकमेव दर्शयतीति तीररूपतयैव नीरस्य परिणामः । व्यञ्जनायान्तु—यदाऽर्थोऽर्थान्तरं प्रकाशयति, तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत् । यथा—'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ मुखनमनादिवाच्यार्थः प्रथमं प्रतीतिपदमवतीर्ण एव दीप इव घटादिं लज्जादिं व्यनक्तीति वाच्यस्य भानाभाने अपि तद्भेदके भवत इति भावः । न चोक्तयुक्त्योपादानलक्षणामूलकार्थान्तरसंक्रमितवाच्यध्वनौ मुख्यार्थस्य परित्यागं विनैवार्थान्तरस्य बोधनात्तत्रैव लक्षणाव्यञ्जनयोरैक्यं संभवतीति वाच्यम् ? तथासति मुख्यार्थबाधस्तत्सम्बन्धो रूढिप्रयोजनान्यतरच्च लक्षणाबीजम् । तत्र 'एवं वादिनि—'इत्यादौ मुखनमनादिवाच्यार्थस्य बाधाभावेऽपि लज्जादिव्यङ्ग्यस्य लक्षणयैव प्रतिपादनेन तस्या व्यञ्जनास्थानापन्नत्वाङ्गीकारे तुल्ययुक्त्या तस्या एवाभिधास्थानापन्नतयापि मुख्यवृत्तित्वमापद्येत । सर्वाभिमतं गुणवृत्तित्वञ्च भज्येत, तादृशलक्षणयैव सर्वत्र व्यवहर्तुं शक्यत्वात् । तस्यालक्षणाया असुख्यवृत्तित्वं वदता भवताऽकामेनापि वाच्यबाधाभावस्थलेऽस्वीकार एव विधेय इति हृदयम् । ननु त्वत्पक्षेऽपि यदार्थो व्यङ्ग्यमर्थं प्रकाशयति तदा शब्दस्य कीदृशो व्यञ्जनात्मको व्यापारः ? मुख्योऽमुख्यो वा, मुख्यश्चेदभिधैव सः, अमुख्यश्चेद् गुणवृत्तिरेव, अप्रधानवृत्तित्वादिति चेदत्रोच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपि नैवापलपितुं शक्यते, अर्थात् शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः । एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता इत्युक्त्याऽर्थस्य व्यञ्जकत्वेऽपि शब्दस्य सहकारितया व्यङ्ग्यार्थबोधनानुकूलो मुख्य एव व्यापारः, न हि तावता तस्य मुख्यत्वेऽभिधात्वं कथमपि शङ्कनीयम् , अभिधायाः सङ्केतग्रहादिसापेक्षत्वात् । तस्यास्तु प्रकरणादिवैशिष्ट्यापेक्षणेन सामग्रीवैधर्म्यात् । तदेवं व्यञ्जनाया बाधापुरस्कृतत्वात् , सङ्केतानपेक्षणात् , पृथग् भूतार्थप्रत्यायकत्वाच्च, तद्विरुद्धधर्मवल्लक्षणातः क्रमशः स्वरूपभेदं प्रतिपाद्य तयोः परस्परभेदनियामको निम्नरीत्या विषयभेदोऽपि बोद्धव्यः । तथा हि—

कत्वादत्यन्तं विभिन्नेव। अयमाशयः—'सति तात्पर्ये सर्वे सर्वार्थवाचकाः' इति नयेनात्रसिद्धशक्तिनाम्नाऽभिधेव व्यवहितार्थबोधकतया लक्षणामुपैतीति तद्वदेव लक्षणाया अभिधाविशेषरूपत्वाद् व्यञ्जनायाश्च ततो नितरां भिन्नत्वान्न तादात्म्यं कथञ्चित् संभवतीति भावः। अयञ्चापरः स्वरूपभेदः—यदा गुणवृत्तौ पदार्थोऽर्थान्तरमुपलक्षयति, तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते। यथा—'गङ्गायां घोषः' इत्यादौ प्रयोजनहेतुकलक्षणलक्षणायां वाच्यभूतं नीरं लक्ष्यतीरान्वयसिद्धये 'परार्थे स्वसमर्पणम्' इत्युक्तेः स्वरूपं लक्ष्यात्मकमेव दर्शयतीति तीररूपतयैव नीरस्य परिणामः। व्यञ्जनायान्तु–यदाऽर्थोऽर्थान्तरं प्रकाशयति, तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत्। यथा—'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ मुखनमनादिवाच्यार्थः प्रथमं प्रतीतिपदमवतीर्ण एव दीप इव घटादिं लज्जादिं व्यनक्तीति वाच्यस्य भानाभाने अपि तद्भेदके भवत इति भावः। न चोक्तयुक्त्योपादानलक्षणामूलकार्थान्तरसंक्रमितवाच्यध्वनौ मुख्यार्थस्य परित्यागं विनैवार्थान्तरस्य बोधनात्तत्रैव लक्षणाव्यञ्जनयोरैक्यं संभवतीति वाच्यम्। तथासति मुख्यार्थबाधस्तत्सम्बन्धो रूढिप्रयोजनान्यतरच्च लक्षणाबीजम्। तत्र 'एवं वादिनि—'इत्यादौ मुखनमनादिवाच्यार्थस्य बाधाभावेऽपि लज्जादिव्यङ्ग्यस्य लक्षणयैव प्रतिपादनेन तस्या व्यञ्जनास्थानापन्नत्वाङ्गीकारे तुल्ययुक्त्या तस्या एवाभिधास्थानापन्नतयापि मुख्यवृत्तित्वमापद्येत। सर्वाभिमतं गुणवृत्तित्वञ्च भज्येत, तादृशलक्षणयैव सर्वत्र व्यवहर्तुं शक्यत्वात्। तस्याल्लक्षणाया अमुख्यवृत्तित्वं वदता भवताऽकामेनापि वाच्यबाधाभावस्थलेऽस्वीकार एव विधेय इति हृदयम्। ननु त्वत्पक्षेऽपि यदार्थो व्यङ्ग्यत्रयं प्रकाशयति तदा शब्दस्य कीदृशो व्यञ्जनात्मको व्यापारः? मुख्योऽमुख्यो वा, मुख्यश्चेदभिधैव सः, अमुख्यश्चेद् गुणवृत्तिरेव, अप्रधानवृत्तित्वादिति चेदत्रोच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपि नैवापलपितुं शक्यते, अर्थात् शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः। एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता इत्युक्त्याऽर्थस्य व्यञ्जकत्वेऽपि शब्दस्य सहकारितया व्यङ्ग्यार्थबोधनानुकूलो मुख्य एव व्यापारः, न हि तावता तस्य मुख्यत्वेऽभिधात्वं कथमपि शङ्कनीयम्, अभिधायाः सङ्केतग्रहादिसापेक्षत्वात्। तस्यास्तु प्रकरणादिवैशिष्ट्यापेक्षणेन सामग्रीवैधर्म्यात्। तदेवं व्यञ्जनाया बाधापुरस्कृतत्वात्, सङ्केतानपेक्षणात्, पृथग् भूतार्थप्रत्यायकत्वाच्च, तद्विरुद्धधर्मवल्लक्षणातः क्रमशः स्वरूपभेदं प्रतिपाद्य तयोः परस्परभेदनियामको निम्नरीत्या विषयभेदोऽपि बोद्धव्यः। तथा हि—

**उत्तरम्**—अयमाशयः शब्दार्थयोर्व्यञ्जकत्वलक्षणो यो धर्मः, स प्रसिद्धाभिधात्मकसम्बन्धानुसारीति न कस्यचिद् विमतिविषयतामर्हति, तथा च शब्दार्थयोर्हि प्रसिद्धो यः स्वाभाविको वाच्यवाचकभावाख्यः सम्बन्धः, तमनुरुन्धान एव व्यञ्जनात्मको व्यापारः प्रकरणादिवैशिष्ट्यादौपाधिकत्वेन ( अनैयत्येन ) प्रवर्तते । अर्थाद् यः स्वसमीपवर्तिनि सम्बद्धे वस्तुनि निजधर्मं भासयति, स उपाधिरुच्यते, तत्सहकारेण च भासमानो धर्म औपाधिको भवति, यथा जपाकुसुमसमीपवर्तिनि स्वच्छस्फटिके लौहित्यं यद् भासते, तत् जपाकुसुमरूपोपाधिसंसर्गकृतत्वादौपाधिकं कथ्यते, तथैव प्रकरणादिवैशिष्ट्यरूपविभिन्नसामग्रीसहकारेण वाच्यवाचकरूपशब्दार्थौ व्यङ्ग्यार्थं व्यङ्क्तः, तस्मात् प्रकरणादिवैशिष्ट्यात्मकसामग्रीरूपोपाधिसहकारेण शब्दे भासमानो व्यञ्जनात्मको व्यापार औपाधिकः ( अनियतः ) उच्यते । तस्याः ( व्यञ्जनायाः ) औपाधिकत्वादेव नियतरूपेण भासमानादभिधात्मकवाचकत्वाद् भेदः । वाचकत्वं हि शब्दस्य स्वाभाविकः सम्बन्धो वर्तते, सङ्केतग्रहणादिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात् । व्यञ्जकत्वव्यापारस्त्वनियतः शब्दस्य सम्बन्ध औपाधिकत्वात् । प्रकरणादिवैशिष्ट्येन तस्य प्रतीते, तद्वैशिष्ट्यविरहेणाप्रतीतेश्च कादाचित्कत्वरूपमौपाधिकत्वं समायाति । ननु यद्यनियतो व्यञ्जनाव्यापारस्तर्हि तत्स्वरूपपरीक्षयाप्यलमिति चेन्नैष दोषः, यतो हि शब्दे तस्यानियतत्वेऽपि स्वप्रतिपाद्यव्यङ्ग्यविषये नियतत्वात् ; तमन्तरा व्यङ्ग्यस्य कदाचिदप्यबोधात् । इदमत्र तत्त्वम्—अभिधावाचकशब्देषु नियता, व्यञ्जना तु प्रकरणादिवैशिष्ट्येन शब्देषु, ततोऽन्यत्र च लक्ष्यमाणा, तदभावे चालक्ष्यमाणेत्यनियता, तस्मात्तयोर्भेद उचित एवेति बोध्यम् ।

अथ पुनरपराऽभिधाव्यञ्जनयोर्भेदमुपपादयति—'लिङ्गत्वन्यायश्च…'इत्यादि । अयं भावः—लिङ्गत्वन्यायोऽनुमितिहेतुत्वतुल्यत्वम् । अस्य व्यञ्जकत्वस्य प्रतीयते, तथाहि यथा लिङ्गत्वं कारणत्वम् , आश्रयेषु धूमादिषु इच्छाधीनत्वात् सिषाधयिषासाध्यत्वात् अनियतावभासम् = नियमतोऽज्ञायमानम् , अथ च स्वविषये = अन्वयव्यतिरेकि-केवलान्वयि-केवलव्यतिरेकित्वेषु अव्यभिचारि = नियतम् , तथैवेदं यथा दर्शितं व्यञ्जकत्वम् , शब्दात्मनि = वाचकशब्दे चानियतत्वादेव = नियमेनावर्तनादेव तस्य व्यञ्जकत्वस्य वाचकत्वप्रकारता=अभिधाविशेषता, कल्पयितुं न शक्येति शब्दार्थः। भावार्थस्तु—यथा केवलान्वयित्वादिधर्मत्रये नियतापि धूमादिनिष्ठा हेतुता सिषाधयिषादिसत्त्वे प्रतीयमाना, तदभावे ( सिषाधयिषाद्यभावे ) त्वप्रतीयमानाऽनियतप्रतीतिः प्रतिभासते, तथैव व्यञ्जकताऽपि व्यङ्ग्यविषये नियताऽपि प्रकरणादिवैशिष्ट्य-

सद्भावे प्रतीयमाना तदभावे चाप्रतीयमाना इति व्यङ्ग्यनियतप्रतीतिरेव व्यञ्जकशब्देषु, अभिधा तु वाचकशब्देषु नियता, न च नियता, तस्मादभिधाविशेषो न व्यञ्जनेति सारम्।

(११) प्रश्नः—व्यञ्जनाया अभिधातः पार्थक्ये मीमांसकानुमतत्वं सयुक्तिकं प्रतिपाद्य, निम्नसन्दर्भः लोचनस्थं व्याख्येयः—'दृश्यते हि भावानामपरित्यक्तस्वस्वभावानामपि सामग्र्यन्तरसम्पातसम्पादितौपाधिकव्यापारान्तराणां विरुद्धक्रियत्वम्। तथाहि हिममयूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव, प्रियाविरहदहनदह्यमानमानसैर्जनैरालोक्यमानानां सतां, सन्तापकारित्वं प्रसिद्धमेव' इति।

उत्तरम्—शब्दानां नित्यशब्दार्थसम्बन्धवादिना वाक्यान्तरेषु पौरुषेयाऽपौरुषेयवाक्ययोर्वैलक्षण्यमभिदधता मीमांसकेनापि व्यञ्जनारूप औपाधिको धर्मोऽवश्यमभ्युपगन्तव्यः अन्यथा व्यञ्जनानभ्युपगमे मीमांसकानां शब्दार्थसम्बन्धस्य नित्यत्वे सत्यपि पौरुषेयापौरुषेययोर्वाक्ययोरर्थप्रतिपादने वैलक्षण्यं न स्यात्। व्यञ्जनाऽभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितौपाधिकव्यञ्जनात्मकव्यापारान्तराणां स्वाभिधेयाभिधानलक्षणसम्बन्धापरित्यागे सत्यपि पुरुषाणां भ्रमप्रमादादिवशान्मिथ्यार्थताया अपि संभवेनापौरुषेयवेदादिवाक्ये च निर्मातृपुरुषाभावाद् भ्रमप्रमादाद्यसंभवेन तयोर्वैलक्षण्यं साधु समुपपद्यते। एवञ्च लौकिकवाक्यगतनिर्मातृपुरुषतात्पर्यविषयार्थप्रकाशकत्वधर्म एव पौरुषेयवाक्यमपौरुषेयवाक्याद् व्यतिरेचयति। स च तादृशार्थप्रकाशकत्वधर्मो नाभिधा वक्तुं पार्यते तदर्थे सङ्केतविरहात्। नापि लक्षणा, मुख्यार्थबाधाद्यभावात्। अपि तु व्यञ्जकत्वमेवेत्यकामेनापि तेनापि व्यञ्जना स्वीकर्तव्यैव। तदस्वीकारे तद्वैलक्षण्यानुपपत्तेः।

अथ वह्नेरुष्णत्वत्यागं विना न हि शैत्यं कथमपि संभवतीति पौरुषेयवाक्यानां यथार्थबोधकत्वत्यागमन्तरा तद्विरुद्धायथार्थतात्पर्यविषयार्थप्रकाशकत्वधर्मयोगो न केनापि प्रकारेण संभवतीत्याशङ्कां समाधातुमाह—दृश्यते हि भावानामित्यादि। अयं भावः पदार्था हि स्वाभाविकनिजधर्मपरित्यागं विनाऽपि सामग्र्यन्तरसम्पर्केणौपाधिकव्यापाराविष्टतया विरुद्धक्रियामप्युपजनयन्ति। तथाहि चन्द्रकिरणनलिनीदलादयः सकलजीवलोकसन्तप्तस्वान्तनितान्तशान्तिजनकं स्वाभाविकं शीतलत्वमुद्वहन्त एव प्रियाविरहदन्दह्यमानमानसान् मानवजनान् सन्तापयन्ति, वह्निश्च नैसर्गिकमुष्णत्वं वहन्नेव

सतीयोषितोऽग्निरपि शीतलत्वमाश्रयति । उक्तमपि–'सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता । तदाऽभवत्तत्पतिभक्तिगौरवाद् हुताशनश्चन्दनपङ्कशीतलः ॥' इत्यादि । तस्मान्नायं नियमो यत् स्वधर्मं विहायैव पदार्थो तद्विरुद्धं धर्मं भजते, तथा च प्रकृतेऽपि पौरुषेयवाक्यानां यथार्थस्वार्थबोधजनकत्वेऽपि अयथार्थतात्पर्यार्थप्रकाशकत्वं नासङ्गतम्, तदुक्तं वृत्तौ—'तस्मात् पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसम्बन्धे मिथ्यार्थत्वं समर्थयितुमिच्छता, वाचकत्वव्यतिरिक्तं किञ्चिद्रूपमौपाधिकं व्यक्तमेवाभिधानीयम् । तच्च व्यञ्जकत्वादृते नान्यद् । व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम् । पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति । स च व्यङ्ग्य एव, नाभिधेयः । तेन सहाभिधानस्याभिधारूपस्य वाच्यवाचकतालक्षणसम्बन्धाभावात् ।' इति ।

(९१) प्रश्नः—**व्यञ्जनाया नैयायिकानुमतत्वं सम्यक् प्रतिपाद्य व्यङ्ग्यव्यञ्जकभावस्य लिङ्गलिङ्गिभावसम्बन्धवदेव कुतो नाङ्गीक्रियते ? इति सोपपत्तिकं युक्त्या विशेषेण विवेचयत ।**

**उत्तरम्**—प्रमाणतत्त्वविदां नैयायिकानामपि व्यञ्जनाऽभिमतैव प्रतीयते, तथाहि तार्किकाणां नये शब्दार्थयोरनित्यत्वात् तत्सम्बन्धस्याप्यनित्यत्वेन यथा दीपस्य घटाद्यर्थान्तरप्रकाशकत्वं सर्वानुभवसिद्धं नापलपितुं पार्यते, तथैव शब्दार्थयोरपि स्ववाच्यस्वेतरार्थप्रकाशकत्वं नानह्नवमिति व्यञ्जकत्वे युक्तिविदां नैयायिकानामपि न कापि विप्रतिपत्तिरिति भावः । अर्थात् तार्किकाणां वाचकत्वविषये विप्रतिपत्तयः प्रवर्तन्तां नाम–यत् शब्दानां वाचकत्वमिदं स्वाभाविकं ( नित्यम् ) आहोस्वित् सङ्केतजन्यत्वात्सामयिकम् ( अनित्यम् ) इत्यादि । वाचकत्वात् पश्चाज्जायमाने प्रदीपादिलोकप्रसिद्धप्रकाशकपदार्थान्तरसाधारणे व्यञ्जकत्वे स्वीक्रियमाणे विमतीनां न कोऽप्यवसरः सम्भाव्यते । एतावता लोकाप्रसिद्धे वाचकत्वे नैयायिकानां नित्यानित्यत्वविवादोऽनेकप्रकारकः सम्भवति, न तु लोकप्रसिद्धे पदार्थान्तरेषु बहुधोपलभ्यमाने व्यञ्जकत्वे । व्यञ्जकत्वं हि यादृशमेकत्र प्रदीपादौ दृष्टं, तादृशमेवान्यत्रापि शब्दादौ सम्भवतीति न कोऽपि विवादावसरस्तेषामपि । तत्र हठाद् विवादे त्वनुभवसिद्धवस्त्वपह्नवत्वमापतेदिति हृदयम् । तदुक्तं वृत्तौ–'अलौकिके ह्यर्थे ( परमाण्वादिविषये ) तार्किकाणामभिनिवेशाः प्रवर्तन्ते, न तु लौकिके न हि नीलमधुरादिष्वशेषलोकेन्द्रियगोचरे बाधारहिते तत्त्वे परस्परं विप्रतिपन्ना दृश्यन्ते । न हि बाधारहितं नीलं नीलमिति ब्रुवन्नपरेण प्रतिषिध्यते 'नैतन्नीलं पीतमेतत्' इति । अर्थात् प्रत्यक्षविषये नीलादौ न कस्यापि

विवादो भवति, अपि तु तदिदं प्रकृतिसिद्धमिदं, परतन्त्रसिद्धमिदं वेति तत्कारण एव विवाद इत्यभिसन्धिः । एवं व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतादिध्वनीनामशब्दरूपाणां च कटाक्षनिरीक्षणादिचेष्टादीनां यत् सर्वेषामपि सचेतसामनुभवसिद्धम्, तत् न केनाप्यपह्नोतुं शक्यते इति तार्किकैरपि नापलपितुं शक्यं तद्व्यञ्जकत्वमिति भावः । लोके हि गुरुजनसन्निधौ स्वकीयमर्थं व्यञ्जनया प्रत्याययन्तो विविधा व्याहारा इङ्गितप्रभृतयो व्यापारविशेषाश्च विदग्धगोष्ठीषु विभाव्यन्ते, तानात्मन उपहास्यतां परिजिहीर्षन् कः सचेतास्तिरस्कुर्वीत । नैतानि विदग्धजनसाङ्केतिकव्यवहारार्थं व्यञ्जना चेदकामेनाप्यङ्गीकार्यैव चेत्, तदन्यत्रापि किमिति नाङ्गीक्रियते, तत्रापि व्यञ्जनाऽनङ्गीकारे तु सर्वानुभवसिद्धमप्यपह्नुवन्नुपहसनीय एव स्यात् सचेतसां सतामिति भावः ।

ननु शब्दानां गमकत्वरूपं व्यञ्जकत्वमस्माभिरपि ( तार्किकैः ) स्वीक्रियत एव, परन्तु तद्धि व्यञ्जकत्वं लिङ्गत्वमेव, न त्वतिरिक्तं व्यञ्जनाख्यं किञ्चित् । व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति तेषां शब्दानां लिङ्गलिङ्गिभाव एव व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्पदार्थः । अतश्चैतदवश्यमेव बोद्धव्यम्, यस्माद् वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव भवद्भिरप्यालङ्कारिकैः प्रतिपादितमेव । वक्त्रभिप्रायश्चानुमेय एवेति भावः । इदमत्र तत्त्वम्—व्यङ्ग्यस्य रसादिवस्तुप्रभृतेर्व्यञ्जकेन शब्द-तदर्थादिना सह व्यञ्जनावादिनाऽऽलङ्कारिकेणापि नियतः कश्चन सम्बन्धोऽवश्यं स्वीकरणीयः । इतरथा सर्वत्रासम्बद्धार्थध्वननमापद्येत । स च सम्बन्धो ज्ञाप्यज्ञापकभाव एवौचित्यात्कल्प्यते इति व्याप्येन ज्ञापकेन शब्दादिना साधनेन, व्यापकस्य ज्ञाप्यस्य रसादिवस्तुप्रभृतेः साध्यस्य बोधनमनुमानमेवेति न व्यङ्ग्यरसादिबोधनार्थं व्यञ्जनायाः प्रयोजनम् । तदुक्तं महिमभट्टेन–'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति । सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥' इति । परकीयेच्छाया अनुमेयमात्रत्वादिदं पुनर्वक्तुरभिप्रायस्य व्यङ्ग्यत्वं प्रतिपादयता व्यञ्जनावादिनाऽप्यगत्या स्वीकरणीयमेव । विशेषतस्तु व्यक्तिविवेकादौ द्रष्टव्यमिति चेदत्रोच्यते-उक्तरीत्या व्यञ्जनाया लिङ्गत्वतादात्म्यमपि यदि सम्भावितं स्यात्तदा किं न छिन्नम् । यतोऽस्माभिरभिधालक्षणाभ्यामतिरिक्तो व्यञ्जनालक्षणः शब्दव्यापारोऽस्तीति स्वीकृतम्, तस्य च व्यञ्जनानिष्ठस्याभिधायतिरिक्तत्वस्य लिङ्गत्वाङ्गीकारेऽपि न काचित् क्षतिः, तद्धि व्यञ्जकत्वं लिङ्गत्वमस्तु, अन्यद् वा, सर्वथैव प्रसिद्धशाब्दप्रकाराभिधादिविलक्षणशाब्दव्यापारविषयत्वञ्च तस्यास्तीति नास्त्येवावयोर्विवादः । एतावता व्यञ्जनाया अभिधायतिरिक्तत्वस्या-

रसे एवास्माकमाग्रहः, स च तस्य लिङ्गत्वरूपतां वदता भवतापि स्वीकृत एव, तत्कृतो नस्त्वया सह विवाद इति भणितम् । वस्तुतस्तु नायं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र, व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति । उभयोर्वैयधिकरण्येऽपि कुत्रचित्तादात्म्यं सम्भवतीति भावः । यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया—'वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमात् तत्प्रकाशने शब्दानां लिङ्गत्वमेव' इति, तदेतद् यथाऽस्माभिरभिहितम्, तद्विभज्य प्रतिपाद्यते—द्विविधो हि विषयः शब्दानाम्—अनुमेयः, प्रतिपाद्यश्च । तत्रानुमेयो विवक्षालक्षणः । विवक्षा च शब्दस्वरूपप्रकाशनेच्छा, शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा । अर्थात् शब्दप्रयुयुक्षा, अर्थप्रतिपिपादयिषा चेति द्विप्रकारा विवक्षा भवति । तत्र प्रथमा ( शब्दप्रयुयुक्षा ) न शाब्दबोधाङ्गम्, सा हि प्राणित्वमात्रफला, अर्थात् शब्दप्रयुयुक्षया केवलं प्राणित्वमनुमातुं शक्यते, अप्राणिनां तदभावात्, न तु शाब्दबोधं जनयितुं सालम् । द्वितीया ( अर्थप्रतिपिपादयिषा ) तु शब्दविशेषावधारणावसितव्यवहिताऽपि शब्दकारणव्यवहारकारणीभूता । ते तु द्वे अपि अनुमेयो विषयः शब्दानाम् । अर्थात् ते उभे अपि विवक्षे अनुमेये भवतः परकीयेच्छाया अनुमितिमात्रगोचरत्वात् । प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थो द्विविधो ज्ञेयः—वाच्यो, व्यङ्ग्यश्च । प्रयोक्ता हि कदाचित् स्वशब्देनार्थं प्रकाशयितुं समीहते, कदाचित् केनचित् प्रयोजनेन गोपनकृतार्थसौन्दर्यातिरेचनादिरूपेण वाचकशब्दानभिधेयतया व्यङ्ग्यरूपमर्थं प्रकाशयितुं समीहते । स तु द्विविधोऽपि वाच्यव्यङ्ग्यलक्षणः प्रतिपाद्यो विषयः शब्दानां न लिङ्गितयाऽनुमेयत्वेन प्रकाशते किन्तु कृत्रिमेणाकृत्रिमेणाभिधाव्यञ्जनालक्षणेन सम्बन्धान्तरेण एतावता प्रयोक्तुः शब्दप्रयुयुक्षा, ततोऽर्थप्रतिपिपादयिषा चोच्चार्यमाणशब्दतोऽनुमीयते, इत्यनुमेयमेव तदिच्छाद्वयम् । वाच्यो व्यङ्ग्यश्चार्थो नानुमेयः, अभिधाव्यञ्जनाभ्यामेव बोधितत्वादनुमित्यगोचरत्वात् । तस्मान्न व्यञ्जनाऽनुमानेन गतार्थेति फलितम् । वाच्यव्यङ्ग्ययोः कथं नानुमेयत्वमिति न शङ्कनीयम् । 'अयमर्थोऽस्य विवक्षाविषयः, एतदुच्चारितशब्दबोध्यत्वात्' इत्यनुमानेनार्थनिष्ठविवक्षाविषयताया एव साध्यत्वेन प्रतीतेरर्थस्य पक्षत्वेन तद्रूपेणाप्रतीतेः । यदि हि लिङ्गतया तत्र शब्दानां व्यवहारः स्यात् तदा शब्दार्थे सम्यक्त्वमिथ्यात्वादिविवादा एव न प्रवर्तेरन्, धूमादिलिङ्गानुमितानुमेयान्तरवत् । अर्थात् यदि वाच्यव्यङ्ग्ययोरनुमितिरेव भवेत्तर्हि तदर्थविशेष्यको यथार्थत्वायथार्थत्वप्रकारकः संशय एव नोद्भवेत्, अनुमितेर्निश्चयात्मकत्वात् । न हि धूमहेतुकानुमितिगोचरवह्निविषयक-

तादृशः सन्देहः समुदेति । जानन्ते न तु काव्यविदग्धे विदितविषयाणां तादृशाः संशया इति न तस्यानुमितिविषयत्वमिति भावः । तस्मात् अनुमित्यापाद्यव्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः । तद्विषयीकृते तु प्रतिपाद्यतयैव । तत्रापि व्यङ्ग्यरूपे प्रतिपाद्ये न शब्दानां वाचकत्वेन व्यापारः संभवति, तादृशव्यङ्ग्यार्थस्य सङ्केतितत्वाभावादभिधया बोधयितुमशक्यत्वात् । अपि तु सम्बन्धान्तरेणैव, तदेव सम्बन्धान्तरं व्यञ्जना नाम । न हि तत्सम्बन्धान्तरं लिङ्गलिङ्गिभाव एवेति वक्तुं शक्यम्, आलोकादौ व्यभिचारात् । अर्थात् आलोकादौ घटादिनिरूपिता व्यञ्जकता विद्यते, न तु लिङ्गता, आलोकादेर्घटाद्यनुमितिसाधनत्वाभावात् । तथा च व्यभिचारस्य स्फुटत्वान्न तयोस्तादात्म्यमिति भावः ।

**(११) प्रश्नः—'लावण्यसिन्धुरपरैव हि केयमत्र, यत्रोत्पलानि शशिना सह संप्लवन्ते । उन्मज्जति द्विरदकुम्भतटी च यत्र, यत्रापरे कदलिकाण्डमृणालदण्डाः ॥' इति पद्यस्य ध्वनित्वं, गुणीभूतव्यङ्ग्यत्वं वा संभवतीति विवक्षितार्थप्रदर्शनपुरस्सरं सम्यग् विविच्य, अलंकाराणां चमत्कृतिजनकत्वे निदानं प्रतिपादयत ।**

**उत्तरम्—**जलक्रीडाविधित्सयाऽधिततटिनीतटनवतरन्तीं लावण्यप्रसाधितशरीरामपनीतावगुण्ठनां कामपि ललनामकस्माद्विलोक्य विस्मयमानः कश्चिद् विदग्धः समुत्प्रेक्षते—लावण्यसिन्धुरित्यादि । अत्र रूपकानुप्राणितां व्यङ्ग्योपस्कृतां वाच्यभूतामतिशयोक्तिमेव केचन मन्यन्ते । अत एवाग्रे आनन्दवर्धनाचार्योऽलंकारान्तरसंकीर्णवाच्यातिशयोक्तेरिदमेवोदाहरणं वक्ष्यते । अन्ये तु सिन्धूत्पल–शशि–द्विरद–कुम्भतटी–कदलीकाण्ड–मृणालदण्डशब्दाप्रकृतेर्बाधितार्थका भूत्वा स्वार्थं तिरस्कृत्य ललना–भ्रूविक्षेप–वदन–कुचद्वय–जङ्घायुगल–बाहुलतायुग्मरूपाणि वस्तूनि व्यञ्जन्ति । तानि च व्यज्यमानानि वस्तूनि 'अपरैव केयम्' इत्युक्तिबोधितमद्भुतरूपं वाच्यमुपस्कुर्वन्तीति तिरस्कृतवाच्यशब्दव्यङ्ग्यानां वाच्यरूपस्येतरस्याङ्गत्वमिति वस्तुरूपव्यङ्ग्यापेक्षयैवास्य गुणीभूतव्यङ्ग्यत्वमिति प्राहुः । वस्तुतस्तु शृङ्गाररस्य प्राधान्यविवक्षायां ध्वनित्वमपीहास्त्येवेति न काप्यनुपपत्तिः । तदुक्तं—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् । धत्ते रसादितात्पर्य–पर्यालोचनया पुनः ॥' इति ।

'वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशानुगमे सति । प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥' इति कारिकानुसारं वाच्यभूतोऽलंकारवर्गो व्यङ्ग्यांशस्यालंकारस्य वस्तुनो

वा यथायोगं सम्पर्के सति चमत्कारातिशयं दधानो लक्षणकृता स्थालीपुलाकन्यायेन प्रदर्शितः। तथा च व्यङ्ग्यानुप्राणितो वाच्यालङ्कारसमूहः सुतरां चमत्करोति। लक्ष्यविवेचने सर्वेषामेव वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यमहिम्नैव प्रायश्चारुत्वातिशयो विभाव्यते इति भावः। तथा हि दीपके, समासोक्तौ च यथा व्यङ्ग्योपमाया, व्यङ्ग्याप्रस्तुतवस्तुनश्च सम्पर्केण सुषमातिशयजनकत्वं प्रतीयते तथैवान्येष्वप्यलङ्कारेषु व्यङ्ग्यवस्त्वलंकारसंस्पर्शेन शोभातिशयाधायकं भवति। इदमत्र तत्त्वं सर्वेषामेव वाच्यालंकाराणां गुणीभूतव्यङ्ग्यसङ्गेनैव चारुतातिशयो भवतीति निश्चितम्। तच्च व्यङ्ग्यं क्वचिद् वस्तुरूपं, क्वचिदलंकाररूपञ्च। तत्र समासोक्त्यादिषु वस्तु, दीपकादिषु चोपमालंकारो व्यङ्ग्यतां भजते। अथवा सर्वत्रैवार्थालंकारेषु अर्थानां विच्छित्तिविशेषाधायकत्वरूपातिशयितत्वसम्पादिकाव्यञ्जनागम्याऽतिशयोक्तिरेवानुप्राणिका, तां विना तेषां कविप्रतिभोत्थापितत्वविरहान्न स्वरूपसम्प्राप्तिः संभवति। तथा च येषु चालंकारेषु सादृश्यमुखेन वैचित्र्यात्मकालंकारत्वप्रतिलम्भो यथा—रूपकोपमातुल्ययोगितानिदर्शनादिषु, तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं, तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूतव्यङ्ग्यता निर्विवादैव। तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्वे एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वञ्च तेषां तथाजातीयानां सर्वेषामेवोक्तानां दीपकतुल्ययोगिताप्रभृतीनामनुक्तानां संदेहादीनां साधारणम् गुणीभूतव्यङ्ग्यत्वलक्षणो सर्वे एवैते सुलक्षिता भवन्ति। इदमत्र बोध्यम्—'गौरिव गवय' इत्यादावुपमा, 'आदित्यो यूपः' इत्यादौ रूपकम्, 'स्थाणुर्वा पुरुषो वा' इत्यादौ सन्देहः, शुक्तौ 'इदं रजतम्' इत्यादौ भ्रान्तिमान् 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादावर्थापत्तिः, 'इको यणचि' इत्यादौ यथा संख्यम्, 'द्वा सुपर्णा सयुजा सखाया' इत्यादावतिशयोक्तिश्च नालङ्कारत्वेन व्यवह्रियन्ते वैचित्र्यविशेषाधायकव्यङ्ग्यसम्पर्कविरहादिति व्यतिरेकज्ञानात्, 'चन्द्रवन्मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' 'जटा नेयं वेणी' 'नेदं मुखं किन्तु चन्द्रः' इत्यादौ चोपमादयोऽलङ्कारत्वेन प्रतिभासन्ते तादृशव्यङ्ग्यसम्पर्कसत्वात्, इत्यन्वयज्ञानाच्च व्यङ्ग्यस्यैवालङ्कारत्वसम्पादकता प्रतीयते। तच्च व्यङ्ग्यं प्रधानीभूतं सद्ध्वनिरूपतां बिभ्रदलङ्कारान् प्रसाधयति स्वयमलंकार्यत्वात्। अप्रधानन्तु गुणीभूतव्यङ्ग्यत्वरूपं पिहितकामिनीकुचकलशवत् निगूढं हारादीनि चोपमा प्रभृतान् नितरां सुसज्जयति, इति गुणीभूतव्यङ्ग्यत्वं समेषा-

वा यथायोगं सम्पर्के सति चमत्कारातिशयं दधानो लक्षणकृता स्थालीपुलाकन्यायेन प्रदर्शितः। तथा च व्यङ्ग्यानुप्राणितो वाच्यालङ्कारसमूहः सुतरां चमत्करोतीति। लक्ष्यविवेचने सर्वेषामेव वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यमहिम्नैव प्रायश्चारुत्वातिशयो विभाव्यते इति भावः। तथा हि दीपके, समासोक्तौ च यथा व्यङ्ग्योपमाया, व्यङ्ग्याप्रस्तुतवस्तुनश्च सम्पर्केण सुषमातिशयजनकत्वं प्रतीयते तथैवान्येष्वप्यलङ्कारेषु व्यङ्ग्यवस्त्वलंकारसंस्पर्शेन शोभातिशयाधायकं भवति। इदमत्र तत्त्वं सर्वेषामेव वाच्यालंकाराणां गुणीभूतव्यङ्ग्यसम्बन्धेनैव चारुत्वातिशयो भवतीति निश्चितम्। तच्च व्यङ्ग्यं क्वचिद् वस्तुरूपं, क्वचिदलंकाररूपञ्च। तत्र समासोक्त्यादिषु वस्तु, दीपकादिषु चोपमालंकारो व्यङ्ग्यतां भजते। अथवा सर्वत्रैवार्थालंकारेषु अर्थानां विच्छित्तिविशेषाधायकत्वरूपातिशयितत्वसम्पादिका व्यञ्जनागम्याऽतिशयोक्तिरेवानुप्राणिका, तां विना तेषां कविप्रतिभोत्थापितत्वविरहान्न स्वरूपसम्प्राप्तिः संभवति। तथा च येषु चालंकारेषु सादृश्यमुखेन वैचित्र्यात्मकालंकारत्वप्रतिलम्भो यथा—रूपकोपमातुल्ययोगितानिदर्शनादिषु, तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं, तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूतव्यङ्ग्यता निर्विवादैव। तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्वे एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वञ्च तेषां तथाजातीयानां सर्वेषामेवोक्तानां दीपकतुल्ययोगिताप्रभृतीनामनुक्तानां संदेहादीनां साधारणम्। गुणीभूतव्यङ्ग्यत्वलक्षणे सर्वे एवैते सुलक्षिता भवन्ति। इदमत्र बोध्यम्—'गौरिव गवय' इत्यादावुपमा, 'आदित्यो यूपः' इत्यादौ रूपकम्, 'स्थाणुर्वा पुरुषो वा' इत्यादौ सन्देहः, शुक्तौ 'इदं रजतम्' इत्यादौ भ्रान्तिमान् 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादावर्थापत्तिः, 'इको यणचि' इत्यादौ यथा संख्यम्, 'द्वा सुपर्णा सयुजा सखाया' इत्यादावतिशयोक्तिश्च नालङ्कारत्वेन व्यवह्रियन्ते वैचित्र्यविशेषाधायकव्यङ्ग्यसम्पर्कविरहादिति व्यतिरेकज्ञानात्, 'चन्द्रवन्मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं पद्मं किमु मुकुरविम्बं किमु मुखम्' 'जटा नेयं वेणी' 'नेदं मुखं किन्तु चन्द्रः' इत्यादौ चोपमादयोऽलङ्कारत्वेन प्रतिभासन्ते तादृशव्यङ्ग्यसम्पर्कसत्त्वात्, इत्यन्वयज्ञानाच्च व्यङ्ग्यस्यैवालङ्कारत्वसम्पादकता प्रतीयते। तच्च व्यङ्ग्यं प्रधानीभूतं सद्ध्वनिरूपतां बिभ्रदलङ्कारान् प्रसाधयति स्वयमलंकार्यत्वात्। अप्रधानन्तु गुणीभूतव्यङ्ग्यस्वरूपं पिहितकामिनीकुचकलशवत् निगूढं हारादीनि चोपमाप्रभृतान् नितरां सुसज्जयति, इति गुणीभूतव्यङ्ग्यत्वं समेषा-

मेवालङ्काराणां विच्छित्तिविशेषवायकस्वरूपालङ्कारत्वसम्पादने मुख्यं निदानमिति भावः ।

(९३) प्रश्नः—'दुराराधा राधा सुभग ! यदनेनापि मृजत-
स्तवैतत् प्राणेशाजघनवसनेनाश्रुपतितम् ।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे !
क्रियात् कल्याणं वो हरिरनुनयेष्वेव मुदितः ॥'

इति पद्ये ध्वनित्वं गुणीभूतव्यङ्ग्यत्वं वेति व्यङ्ग्यार्थप्रदर्शनपुरस्सरं विशदं विविच्य निर्णयो विलिखितो विषयः सोपक्रमं विवेचनीयः—राजानमपि सेवन्ते विषमप्युपभुञ्जते । रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥

उत्तरम्—मानिनीं राधामनुनेतुमुद्यतं कृष्णं प्रति नायिकोपालम्भं पल्लवयन् कविः कमपि कृष्णाशिषा संवर्द्धयति—'दुराधरा राधा……'इत्यादि । हे सुभग ! कृष्ण ! यस्मादनेन पुरोदृश्यमानेन मदन्यप्रेयस्या भ्रमवशात् परिहितजघनवसनेन ममैतत्पतितं नयनजलं प्रोञ्छतस्तव वृषभानुसुता प्रसादयितुमनर्हा, यतः स्त्रीचेतः पत्युरसह्यापराधजन्यकार्कश्यं प्राप्नुवत् सत् अनुनयासहिष्णु भवति, तस्मात् तव चातुर्यप्रयुक्तकृत्रिमोपचारैरलं न किमपि तस्य फलं भविष्यति, अतो विरम, इति राधयोक्तः कृष्णः कल्याणं वः क्रियात् इति भावः । अत्र सुभग इति सम्बोधनेन वल्लभाभिः क्षणमपि विहातुमशक्यत्वं, बहुवल्लभत्वमोऽव्यत्वञ्च, अनेनेति पुरोवर्तितया प्रत्यक्षस्य वसनस्यानपलपनीयत्वं, प्रेयसीसम्बन्धितया सस्नेहधारणीयत्वं, प्रतिपक्षललनायाः कोपौचित्यं च, तदगोपनेन तत्रादरातिशयः, लज्जात्यागश्च, राधेति स्वनामोच्चारणेन परिभवासहिष्णुत्वं, दुराराधत्वेन मानदार्ढ्यम्, अपराधौग्र्यञ्च, अश्रुणःपातेनानपरोधनीयत्वं, तस्य प्रोञ्छनेन अश्रुत धारावाहित्वम्, स्त्रीशब्देन प्रणयावनभिज्ञत्वम्, चेतसः कार्कश्येन स्वाभाविकसौकुमार्यत्यागात् प्रसादनानर्हत्वम्, उपचाराणामाधिक्येन नायकस्य नर्मकपटपटुत्वं, बहुवचनेनानुनयबाहुल्यद्वारैतादृशावस्थाभूयस्त्वं प्रेयस्या सौभाग्यञ्च प्राचुर्येण व्यज्यमानं तादृशं वाच्यमेव प्रगुणयति इत्येतद्दृष्ट्या निरुक्तपद्यस्य गुणीभूतव्यङ्ग्यत्वं समायाति । प्राधान्येन व्यज्यमानेर्ष्याविप्रलम्भशृङ्गारापेक्षया तु ध्वनित्वमायाति । तदुक्तं—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् । धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥' इति । परन्तु सर्वत्र

वा यथायोगं सम्पर्के सति चमत्कारातिशयं दधानो लक्षणकृता स्थालीपुलाकन्यायेन प्रदर्शितः। तथा च व्यङ्ग्यानुप्राणितो वाच्यालङ्कारसमूहः सुतरां चमत्करोति। लक्ष्यविवेचने समेषामेव वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यमहिम्नैव प्रायश्चारुत्वातिशयो विभाव्यते इति भावः। तथा हि दीपके, समासोक्तौ च यथा व्यङ्ग्योपमाया, व्यङ्ग्याप्रस्तुतवस्तुनश्च सम्पर्केण सुषमातिशयजनकत्वं प्रतीयते तथैवान्येष्वप्यलङ्कारेषु व्यङ्ग्यवस्त्वलंकारसंम्पर्शेन शोभातिशयाधायकं भवति। इदमत्र तत्वं सर्वेषामेव वाच्यालंकाराणां गुणीभूतव्यङ्ग्यसङ्गेनैव चारुतातिशयो भवतीति निश्चितम्। तच्च व्यङ्ग्यं क्वचिद् वस्तुरूपं, क्वचिदलंकाररूपञ्च। तत्र समासोक्त्यादिषु वस्तु, दीपकादिषु चोपमालंकारो व्यङ्ग्यतां भजते। अथवा सर्वत्रैवार्थालंकारेषु अर्थानां विच्छित्तिविशेषाधायकत्वरूपातिशयितत्वसम्पादिकाव्यञ्जनागम्याऽतिशयोक्तिरेवानुप्राणिका, तां विना तेषां कविप्रतिभोत्थापितत्वविरहान्न स्वरूपसम्प्राप्तिः संभवति। तथा च येषु चालंकारेषु सादृश्यमुखेन वैचित्र्यात्मकालंकारत्वप्रतिलम्भो यथा—रूपकोपमातुल्ययोगितानिदर्शनादिषु, तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं, तदेव शोभातिशयशालिभवतीति ते सर्वेऽपि चारुत्यातिशययोगिनः सन्तो गुणी भूतव्यङ्ग्यस्यैव विषयः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूतव्यङ्ग्यता निर्विवादैव। तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्वे एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वञ्च तेषां तथाजातीयानां सर्वेषामेवोक्तानां दीपकतुल्ययोगिताप्रभृतीनामनुक्तानां संदेहादीनां साधारणम् गुणीभूतव्यङ्ग्यत्वलक्षणे सर्व एवैते सुलक्षिता भवन्ति। इदमत्र बोध्यम्—'गौरिव गवय' इत्यादावुपमा, 'आदित्यो यूपः' इत्यादौ रूपकम्, 'स्थाणुर्वा पुरुषो वा' इत्यादौ सन्देहः, शुक्तौ 'इदं रजतम्' इत्यादौ भ्रान्तिमान् 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादावर्थापत्तिः, 'इको यणचि' इत्यादौ यथा संख्यम्, 'द्वा सुपर्णा सयुजा सखाया' इत्यादावतिशयोक्तिश्च नालङ्कारत्वेन व्यवह्रियन्ते वैचित्र्यविशेषाधायकव्यङ्ग्यसम्पर्कविरहादिति व्यतिरेकज्ञानात्, 'चन्द्रवन्मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' 'जटा नेयं वेणी' 'नेदं मुखं किन्तु चन्द्रः' इत्यादौ चोपमादयोऽलङ्कारत्वेन प्रतिभासन्ते तादृशव्यङ्ग्यसम्पर्कसत्वात्, इत्यन्वयज्ञानाच्च व्यङ्ग्यस्यैवालङ्कारत्वसम्पादकता प्रतीयते। तच्च व्यङ्ग्यं प्रधानीभूतं सद्ध्वनिरूपतां बिभ्रन्नालङ्कारान् प्रसाधयति स्वयमलंकार्यत्वात्। अप्रधानन्तु गुणीभूतव्यङ्ग्यत्वरूपं पिहितकामिनीकुचकलशवत् निगूढं हारादीनि चोपमा प्रसृतान् नितरां सुसज्जयति, इति गुणीभूतव्यङ्ग्यत्वं समेषा-

वा यथायोगं सम्पर्के सति चमत्कारातिशयं दधानो लक्षणकृता स्थालीपुलाकन्यायेन प्रदर्शितः। तथा च व्यङ्ग्यानुप्राणितो वाच्यालङ्कारसमूहः सुतरां चमत्करोति। लक्ष्यविवेचने समेषामेव वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यमहिम्नैव प्रायश्चारुत्वातिशयो विभाव्यते इति भावः। तथा हि दीपके, समासोक्तौ च यथा व्यङ्ग्योपमाया, व्यङ्ग्याप्रस्तुतवस्तुनश्च सम्पर्केण सुषमातिशयजनकत्वं प्रतीयते तथैवान्येष्वप्यलङ्कारेषु व्यङ्ग्यवस्त्वलंकारसंस्पर्शेन शोभातिशयाधायकं भवति। इदमत्र तत्वं सर्वेषामेव वाच्यालंकाराणां गुणीभूतव्यङ्ग्यसङ्गेनैव चारुतातिशयो भवतीति निश्चितम्। तच्च व्यङ्ग्यं क्वचिद् वस्तुरूपं, क्वचिदलंकाररूपञ्च। तत्र समासोक्त्यादिषु वस्तु, दीपकादिषु चोपमालंकारो व्यङ्ग्यतां भजते। अथवा सर्वत्रैवार्थालंकारेषु अर्थानां विच्छित्तिविशेषाधायकत्वरूपातिशयितत्वसम्पादिकाव्यञ्जनागम्याऽतिशयोक्तिरेवानुप्राणिका, तां विना तेषां कविप्रतिभोत्थापितत्वविरहान्न स्वरूपसम्प्राप्तिः संभवति। तथा च येषु चालंकारेषु सादृश्यमुखेन वैचित्र्यात्मकालंकारत्वप्रतिलम्भो यथा–रूपकोपमातुल्ययोगितानिदर्शनादिषु, तेषु गम्यमानधर्मसुखेनैव यत् सादृश्यं, तदेव शोभातिशयशालिभवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणी भूतव्यङ्ग्यस्यैव विषयः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूतव्यङ्ग्यता निर्विवादैव। तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्वे एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वञ्च तेषां तथाजातीयानां सर्वेषामेवोक्तानां दीपकतुल्ययोगिताप्रभृतीनामनुक्तानां संदेहादीनां साधारणम् गुणीभूतव्यङ्ग्यत्वलक्षणे सर्व एवैते सुलक्षिता भवन्ति। इदमत्र बोध्यम्—'गौरिव गवय' इत्यादावुपमा, 'आदित्यो यूपः' इत्यादौ रूपकम्, 'स्थाणुर्वा पुरुषो वा' इत्यादौ सन्देहः, शुक्तौ 'इदं रजतम्' इत्यादौ भ्रान्तिमान् 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादावर्थापत्तिः, 'इको यणचि' इत्यादौ यथा संख्यम्, 'द्वा सुपर्णा सयुजा सखाया' इत्यादावतिशयोक्तिश्च नालङ्कारत्वेन व्यवह्रियन्ते वैचित्र्यविशेषाधायकव्यङ्ग्यसम्पर्कविरहादिति व्यतिरेकज्ञानात्, 'चन्द्रवन्मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' 'जटा नेयं वेणी' 'नेदं मुखं किन्तु चन्द्रः' इत्यादौ चोपमादयोऽलङ्कारत्वेन प्रतिभासन्ते तादृशव्यङ्ग्यसम्पर्कसत्वात्, इत्यन्वयज्ञानाच्च व्यङ्ग्यस्यैवालङ्कारत्वसम्पादकता प्रतीयते। तच्च व्यङ्ग्यं प्रधानीभूतं सद्ध्वनिरूपतां बिभ्रन्नालङ्कारान् प्रसाधयति स्वयमलंकार्यत्वात्। अप्रधानन्तु गुणीभूतव्यङ्ग्यत्वरूपं पिहितकामिनीकुचकलशवत् निगूढं हारादीनि चोपमा प्रभृतान् नितरां सुसज्जयति, इति गुणीभूतव्यङ्ग्यत्वं समेषा-

मेवालङ्काराणां विच्छित्तिविशेषवायकस्वरूपालङ्कारत्वसम्पादने मुख्यं निदानमिति भावः।

(९३) प्रश्नः—'दुराराधा राधा सुभग ! यदनेनापि मृजत-
स्तवैतत् प्राणेशाजघनवसनेनाश्रुपतितम् ।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे !
क्रियात् कल्याणं वो हरिरनुनयेष्वेवमुदितः ॥'

इति पद्ये ध्वनित्वं गुणीभूतव्यङ्ग्यत्वं वेति व्यङ्ग्यार्थप्रदर्शनपुरस्सरं विशदं विविच्य निम्नपद्ये किमस्ति विषयः सोपक्रमं विवेचनीयः—राजानमपि सेवन्ते विषमप्युपभुञ्जते । रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥

**उत्तरम्**—मानिनीं राधामनुनेतुमुद्यतं कृष्णं प्रति नायिकोपालम्भं पल्लवयन् कविः कमपि कृष्णाशिषा संवर्द्धयति—'दुराधरा राधा······'इत्यादि। हे सुभग ! कृष्ण ! यस्मादनेन पुरोदृश्यमानेन मदन्यप्रेयस्या भ्रमवशात् परिहितजघनवसनेन ममैतत्पतितं नयनजलं प्रोञ्छतस्तव वृषभानुसुता प्रसादयितुमनर्हा, यतः स्त्रीचेतः पत्युरसह्यापराधजन्यकार्कश्यं प्राप्नुवत् सत् अनुनयासहिष्णु भवति, तस्मात् तव चातुर्यप्रयुक्तकृत्रिमोपचारैरलं न किमपि तस्य फलं भविष्यति, अतो विरम, इति राधयोक्तः कृष्णः कल्याणं वः क्रियात् इति भावः। अत्र सुभग इति सम्बोधनेन वल्लभाभिः क्षणमपि विहातुमशक्यत्वं, बहुवल्लभत्वसूचनञ्च, अनेनेति पुरोवर्तितया प्रत्यक्षस्य वसनस्यानपलपनीयत्वं, प्रेयसीसम्बन्धितया सस्नेहधारणीयत्वं, प्रतिपक्षललनायाः कोपौचित्यं च, तदगोपनेन तत्रादरातिशयः, लज्जात्यागश्च, राधेति स्वनामोच्चारणेन परिभवासहिष्णुत्वं, दुराराधत्वेन मानदार्ढ्यम्, अपराधौग्रयञ्च, अश्रुणः पातेनानपरोधनीयत्वं, तस्य प्रोञ्छनेन अद्भुत धारावाहित्वम्, स्त्रीशब्देन प्रणयावनभिज्ञत्वम्, चेतसः कार्कश्येन स्वाभाविकसौकुमार्यत्यागात् प्रसादनानर्हत्वम्, उपचाराणामाधिक्येन नायकस्य नर्मकपटपटुत्वं, बहुवचनेनानुनयबाहुल्यद्वारैतादृशावस्थाभूयस्त्वं प्रेयस्याः सौभाग्यञ्च प्राचुर्येण व्यज्यमानं तादृशं वाच्यमेव प्रगुणयति इत्येतद्दृष्ट्या निरुक्तपद्यस्य गुणीभूतव्यङ्ग्यत्वं समायाति। प्राधान्येन व्यज्यमानेर्ष्याविप्रलम्भशृङ्गारापेक्षया तु ध्वनित्वमायाति। तदुक्तं—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥' इति। परन्तु सर्वत्र

गुणीभूतव्यङ्ग्यस्य ध्वनिरूपता भवत्येवेति नायं नियमः। तदुक्तं वृत्तौ-'यत्र तु वाक्ये रसादितात्पर्यं नास्ति, गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः' इति। यथा-राजानमपि सेवन्ते विषमप्युपभुञ्जते। रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥' इति। अयं भावः-राजसेवनं गरलभक्षणं बहिः-प्रकटितप्रणयाभिरन्तरसिधारानिभाभिः स्त्रीभिः सह रमणश्च क्लेशातिशयसाध्यत्वा-दिष्टप्रतिकूलपरिणामभीषणत्वाच्च वचनरचनाचातुरीचुञ्चुभिश्चतुरैरेव मानवैः साधयितुं शक्यानि, साधारणैर्जनैस्तु दुष्कराण्येवेति व्यज्यते। अत्र क्लेशातिशयसाध्यत्वाद्युक्त-व्यङ्ग्यविशिष्टतया वाच्यस्यैव सहृदयहृदयाह्लादजनकतया रमणीयत्वं प्रतिभासते इति समुदायस्य गुणीभूतव्यङ्ग्यत्वमेव। शान्तरसाङ्गनिर्वेदस्य व्यङ्ग्यत्वेऽपि न प्राधान्यम् अविवक्षितत्वात्। अतस्तन्निमित्तकोऽपि न ध्वनित्वव्यवहारः। तादृशव्यङ्ग्यप्राधान्या-विवक्षान्तु सहृदयहृदयवेद्यतादृशवाच्यचारुत्वप्रकर्ष एव निर्णीते। न चान्यदपि किञ्चिद् व्यङ्ग्यं प्रधानं प्रतिभाति इति सर्वथा गुणीभूतव्यङ्ग्यत्वमेवेति भावः।

(९४) प्रश्नः—**लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः,**
**स्वच्छन्दस्य सखोजनस्य वसतश्चिन्ताज्वरो निर्मितः।**
**एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता,**
**कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥'**

**पद्यमिदं कस्कोऽलङ्कारः समलंकरोतीति विपक्षपक्षोच्छेदपुर-स्सरमाचार्याभिमतं सिद्धान्तपक्षं सप्रपञ्चमुदञ्चयत।**

**उत्तरम्**—गुणगणोचितसमादरमलभमानः कश्चिद् निर्विचार्यसमीक्ष्यकारिणं विधिमुपालम्भते—लावण्यद्रविणव्ययो न गणितः······इत्यादि। अयं भावः-विधातु-रेतत्तन्वीनिर्माणं नाल्पव्ययसाध्यं, न चाकिञ्चित्करं, नवोदासीनहर्षप्रदम्, नापि स्वविषयसुखायातिरिति निष्प्रयोजनमेव सर्वथेति तात्पर्यम्। अत्र निष्फलकार्यकरण-शीलस्य विधेरुपालम्भस्य वाच्यतया ततो वस्तुतोऽनन्यसाधारणसौन्दर्यशालिनिखिल-गुणमालिललनानिर्माणकौशलसम्पदा व्यञ्जनया विधातुः प्रशंसायां पर्यवसन्नायां व्याजस्तुतिरलङ्कार इति केचित्। तन्न चतुरस्रम्, यतोऽस्याभिधेयस्यैतदलङ्कार-स्वरूपमात्रपर्यवसायित्वे न सङ्गतत्वं भवति, तथाहि यतो न तावदयं रागिणः कस्य-चिद् वितर्कः सम्भवति, तस्य 'एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता' इत्येवंविधोक्त्यनुपपत्तेः। स्वयमेव तद्योग्यमात्मानं मन्यमानस्यैवंविधस्वगर्हणा-

नौचित्यात् । नापि नीरागस्योक्तवितर्कः समुपपद्यते, तस्यैवंविधवितर्कपरिहारैक-व्यापारत्वात्, वीतरागो हि नितरां निर्वेदमापन्नो निरीहः सन् जगदेव तुच्छं मन्य-मानः कथमीदृशान् वैषयिकवितर्कान् कुर्यादित्यभिप्रायः। तस्मादप्रस्तुतप्रशंसैवालङ्कारः पद्यमिदं प्रसाधयतीत्याचार्यमतम्, यस्मादनेन वाच्येन गुणीभूतात्मना, निस्सामान्य-गुणावलेपोद्धतस्य, निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य निजापेक्षया विशेषज्ञं न कञ्चिदेवापरं पश्यतः परिदेवितमेतदिति व्यज्यते । तथाहि—लावण्यद्रविणव्यय-गणनाभावक्लेशातिशयस्वीकाररूपप्रथमपादवाच्येन परिदेवयितुरद्भुतगुणगणभूषित-त्वम्, स्वच्छन्दसखीजनचिन्ताज्वरनिर्माणरूपद्वितीयचरणवाच्येन स्वाद्भुतगुणो-त्कर्षप्रयुक्तसमत्सरजनेर्ष्योद्भावनम्, अनुरूपवरालाभप्रयोज्यवराकीहतत्वरूपतृतीयच-रणवाच्येन सर्वाधिकपण्डितम्मन्यत्वम्, विधिकृततन्वीनिर्माणविफलत्वरूपचतुर्थचरण-वाच्येनाप्रस्तुतेन तुल्येन तुल्यमेव स्वनिर्मीतिनिष्फलत्वजन्यपरिदेवितं व्यज्यते इत्य-प्रस्तुतप्रशंसा स्फुटैवेति ।

**(९५) प्रश्नः—चित्रकाव्यं सभेदं निरूप्य, कीदृशं चित्रमानन्दवर्द्धनाचार्य-सम्मतमिति सोपष्टम्भं विवेचयत ।**

**उत्तरम्**—'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते । काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥' 'चित्रं शब्दार्थभेदेन द्विविधञ्च व्यवस्थितम् । तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥' इति कारिकाभ्यां तच्चित्रं काव्यं च शब्दार्थचित्रभेदेन शब्दचित्रमर्थचित्रमिति द्विविधं व्यवस्थितम् । तत्र किञ्चित् शब्दालङ्कारालंकृतं शब्दचित्रं भवति । तद्भिन्नमर्थालङ्कारभूषितमर्थचित्रं भवति । इदमत्रावसेयम्—व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिनामा काव्यप्रकारः व्यङ्ग्यार्थस्या-प्राधान्ये तु गुणीभूतव्यङ्ग्यं नाम काव्यम् । ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनसामर्थ्यशून्यञ्च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोप-निबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम् । न तन्मुख्यं काव्यम्, अपितु काव्यानु-कृतिरेवासौ । तत्र किञ्चिच्छब्दचित्रं यथा—दुष्करयमकादि । वाच्यचित्रं ततः शब्द-चित्रादन्यद् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहित-मुपमाप्रभृति बोध्यम् ।

अथ चित्रपदार्थं निर्वक्तुं परीष्टिमारभते—ननु किमिदं चित्रं नाम? व्यङ्ग्य-राहित्यमेव चित्रत्वमिति चेत्, तन्न युक्तम्, यतो व्यङ्ग्यवस्त्वलङ्काररसादिषु मध्ये

कीर्णो ध्वनिर्यथा–'दन्तक्षतानि करजैश्च विपाटितानि'...'इत्यत्र समासोक्तिसंसृष्टेन विरोधालङ्कारेण सङ्कीर्णस्यालक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकाशनम्, दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात्। संसृष्टालङ्कारसंसृष्टत्वं ध्वनेर्यथा–'अभिनवपयोदरसितेषु....' इत्यत्रोपमारूपकाभ्यां शब्दशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः संसृष्टत्वं ज्ञेयमित्यलम्।

**(१७) प्रश्नः—ध्वनेरनिर्वचनीयत्वं सोपपत्तिकं निरस्यताम्।**

**उत्तरम्**—अयं भावः–यत्र शब्दानामर्थानां च केषाञ्चित् सहृदयहृदयवेद्यं रत्नविशेषाणां जात्यत्वमिव चारुत्वमनाख्येयम् ( अनिर्वचनीयम् ) अवभासते, काव्ये तत्र ध्वनिव्यवहार इति ध्वनेर्लक्षणं केनचिदुक्तं न युक्तम्, यतो शब्दानां स्वरूपाश्रयस्तावद्विशेषोऽक्लिष्टत्वे सति अपुनरुक्तत्वम्, अभिधात्मकवाचकत्वसमानाधिकरणो विशेषश्च प्रसादो = झटित्यर्थसमर्पकत्वं, व्यञ्जकत्वञ्चेति। अर्थानाञ्च विशेषः स्फुटत्वेनावभासनम्, व्यङ्ग्यनिष्ठत्वं, व्यङ्ग्यविशिष्टत्वञ्चेति। तौ द्वावपि शब्दार्थनिष्ठौ विशेषौ चारुत्वानतिरिक्तौ व्याख्यातुमशक्याविति कैश्चिन्मन्यमानावपि बहुधा व्यङ्ग्यव्यञ्जकनिरूपणप्रसङ्गेनास्माभिर्व्याख्यातौ तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादगर्भरभसमूलैव। यस्मादनाख्येयत्वं ( अनिर्वचनीयत्वम् ) शब्दार्थगोचरत्वेन न कस्यचित् सम्भवति। अन्ततोऽनाख्येयशब्देनैव तदाख्यानात्। इदमत्र तत्त्वं ये खलु रत्नजात्यत्वमिवानिर्वचनीयत्वरूपं शब्दार्थचारुत्वं बिभ्रतः काव्यस्य ध्वनित्वं मन्यन्ते, ते सर्वथोपेक्षणीया एव, असम्बद्धप्रलापित्वात्। तत्त्वञ्च तेषां विशेषरूपस्य शब्दार्थयोश्चारुत्वस्य बहुधाऽस्माभिरेव व्याख्यातत्वेन, अनाख्येयशब्दप्रतिपाद्यत्वेन चानाख्येयत्वस्य वक्तुमशक्यत्वात्। सामान्यस्पर्शिविकल्पशब्दगोचरत्वे सति प्रकाशमानत्वं तु यदनाख्येयत्वमुच्यते क्वचित्, तदपि काव्यविशेषाणां रत्नविशेषाणामिव न सम्भवति, तेषां लक्षणकृता व्याकृतरूपत्वात्। रत्नविशेषाणां च सामान्यसम्भावनयैव मूल्याङ्कनदर्शनाच्च। वस्तुतस्तु उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव। वैकटिका एव हि रत्नतत्त्वविदः, सहृदया एव च काव्यानां रसज्ञा इति न कस्याप्यत्र विप्रतिपत्तिः। तदुक्तम्–'अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः। न लक्षणं लक्षणं तु साधीयोऽस्य यथोदितम्।'

# चतुर्थं उद्द्योतः

(१८) प्रश्नः—कविप्रतिभाऽऽनन्त्ये किं निदानमिति विशदं विविच्य, 'स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः....'इति पद्यस्य 'सविभ्रमस्मितोद्भेदाः....' इति पद्यापेक्षया किं प्रयुक्तं वैलक्षण्यमिति सवैचक्षण्यं विवेचयत।

उत्तरम्—'ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः। अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥' इति कारिकानुसारं ध्वनिसम्पर्केण गुणीभूतव्यङ्ग्यसम्पर्केण वा वर्णनीयवस्तूनां लोकोत्तरचमत्कारशालितया नवनवीभावात् वर्णने सति कवीनां प्रतिभा नवनवोन्मेषशालितयाऽप्रतिहतगतिः सती नुतरां समुज्जृम्भते इति सहृदहृदयाह्लादजनकतया विच्छित्तिविशेषशालिध्वनिसम्पर्क एव कविप्रतिभानन्त्यप्रयोजक इति भावः। न च ध्वनिगुणीभूतव्यङ्ग्यप्रपञ्चस्य काव्यवृत्तितया, प्रतिभायाश्च कविनिष्ठतया वैयधिकरण्येनोभयोः सामानाधिकरण्याभावात् कथं तस्य कविप्रतिभाऽऽनन्त्यप्रयोजकत्वं, कार्यकारणयोः सामानाधिकरण्यनियमादिति वाच्यम्? ज्ञानद्वारोभयोः सामानाधिकरण्यस्याक्षुण्णत्वात्। अर्थात् ध्वनित्वप्रकारकज्ञानस्यानन्तप्रतिभायाश्चैकत्रैव कवौ समवेतत्वात्। अथ कथं ध्वनिसम्पर्केण कविप्रतिभाऽऽनन्त्यमिति चेदत्रोच्यते 'अतो ह्यन्यतमेनापि प्रकारेण विभूषिता। वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि॥' इति रीत्या कवीनां वाणी ध्वनिरीतिमनुसृत्य कामपि विलक्षणां चमत्कृतिमादधाना वाल्मीकिप्रभृतिपुरातनकविपरम्परावर्णितार्थसम्बद्धापि अपूर्वत्वं प्रतिपद्यते। अर्थात् व्यङ्ग्यसम्पर्को हि कविवर्णितत्वात् पुरातनमप्यर्थं विलक्षणभङ्गीभिः प्रसाध्य नूतनमिव प्रदर्शयति, रञ्जनद्रव्यमिव पटमित्याकूतम्।

तत्र प्रथममत्यन्ततिरस्कृतवाच्यरूपाविवक्षितवाच्यध्वनिसम्पर्केणापूर्वत्वं यथा—'स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः, परिस्पन्दो वाचामभिनवविलासोक्तिसरसः। गतानामारम्भः किसलयितलीलापरिकरः, स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः॥' इत्यस्यात्यन्ततिरस्कृतवाच्यध्वनिसम्पर्केण 'सविभ्रमस्मितोद्भेदा लोलाक्ष्यः प्रस्खलद्गिरः। नितम्बालसगामिन्यः कामिन्यः कस्य न प्रियाः॥' इति तत्समानार्थकप्राचीनपद्यवर्णितत्वेन पुरातनस्याप्यर्थस्य नवीकरणात् न पौनरुक्त्येन वैरस्यमापद्यते। तथाहि—अत्र मुग्ध–मधुर–विभव–परिस्पन्द–सरस–किसलयित–

परिकर-स्पर्शात्मकवाच्यार्थो बाधितत्वेनात्यन्ततिरस्कृतत्वात् लक्षणामूलव्यञ्जनया क्रमशः सौन्दर्यातिशयसहृदयहृदयहारित्व-अप्रतिहतप्रसरत्व-सवैलक्ष्योच्चारितत्व-विशिष्टाक्लिष्टत्व-तापोपशमकत्वविशिष्टसुकुमारत्व-स्खलितावधिप्रतिरूपत्व-स्पृहणीयतमत्वानि व्यञ्जन्तः पूर्ववर्णितत्वेन प्राचीना अपि ध्वननमहिम्नाऽपूर्वत्वमापाद्यमाना प्रतीयन्ते, तस्माच्च ततोऽस्य गतार्थतेति भावः ।

(९९) प्रश्नः—'शून्यं वासगृहं विलोक्य....' 'निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधूः....' इति प्राचीनार्वाचीनपद्ययोः कतरद्धि पद्यं किं प्रयुक्तं वैलक्षण्यमावहतीति सोपपत्तिकं सम्यग् विविच्य, 'वाणिजक ! हस्तिदन्ता....' इत्यस्य 'करिणीवेहव्वअरो....' इत्यपेक्षयाऽपूर्वत्वे बीजमुपपादयत ।

**उत्तरम्**—'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् । सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥' इति रीत्या सम्प्रति असंलक्ष्यक्रमव्यङ्ग्यरसादिध्वनिसम्पर्केण भूतपूर्वस्याप्यर्थस्याभूतपूर्वत्वमुदाहरति—'निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधूर्बोधत्रासनिरुद्धचुम्बनरसाऽप्याभोगलोलं स्थिता । वैलक्ष्याद् विमुखी भवेदिति पुनस्तस्याऽप्यनारम्भिणः, साकाङ्क्षप्रतिपत्तिनाम हृदयं यातं तु पारं रतेः ॥' इत्येतत्समानार्थके—'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् । विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं, लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥' इति पद्ये बालायालम्बनेन, शून्यगृहाद्युद्दीपनेन, लज्जादिसंचारिणा, चुम्बनाद्यनुभावेन च परिपोषितरतिस्थायिभावकसंभोगशृङ्गारस्य सहृदयैरास्वाद्यमानत्वेऽपि लज्जारूपसंचारिभावस्य स्वशब्दवाच्यत्वरूपरसभावादिदोषदूषितत्वाद्, 'निर्वर्ण्य' इत्यादौ श्रुतिकटुत्वेन, 'गण्ड' इत्यसभ्यार्थस्मारकतयाऽश्लीलत्वेन च दोषेण दूषितत्वाच्च रसापकर्षो दुर्वार इति तदपेक्षया निद्राकैतविन इत्यत्र परस्परचुम्बनाभिलाषधाराया निरोधपरम्परायाः पर्यवसानासम्भवेन व्यज्यमाना रतिरुभयोरपि समानाकारां चित्तवृत्तिं द्योतयन्ती कयापि विलक्षणया छटया शृङ्गारमेव परिपोषयति, न चासौ केनाप्यपकृष्यते इत्यपूर्वत्वमेवासंलक्ष्यक्रमव्यङ्ग्यध्वनिसाम्राज्याद् भासते इति हृदयम् ।

अथ स्वतःसम्भव्यर्थशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यध्वनिसम्पर्केण पुरातनस्याप्यर्थस्य नवत्वमुदाहरति—'वाणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।

यावल्लुलितालकमुखी, गृहे परिष्वक्कते स्नुषा ॥' इत्येतत्समानार्थकस्य—'करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती। हतस्नुषया तथा कृतो, यथा काण्डकरण्डकं वहति ॥' इत्येतस्य प्राचीनपद्यस्य सत्त्वेऽपि 'वाणिजक ! हस्तिदन्ताः···'इत्यस्यार्वाचीनपद्यस्य न गतार्थता सम्भवति, ध्वनिविशेषसम्पर्केण तदर्थस्य नवनवीभावेनैव सहृदयहृदयसंलक्ष्यमाणत्वात्। तथाहि—अनालकालंकृतमुखत्वेन परमरमणीयायाः स्नुषाया विभ्रमावेक्षण—सुरतविलासाकृष्टचेताः सततसुरतभोगक्षामशरीरो मत्सुतः क्षणमपि मृगयार्थं बहिर्न गच्छतीति कुतो मद्गृहे कुञ्जरदन्तादीनां सम्भव इत्यपूर्वं वस्तु लुलितालकमुखीति स्नुषाविशेषणं प्राधान्येन व्यनक्तीति स्वतःसम्भविसंलक्ष्यक्रमार्थशक्त्युद्भवध्वनियोगेनापूर्वं सम्पद्यते इति भावः।

**(१००) प्रश्नः—'सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः'। 'सज्जेहि सुरहिमासो···' प्राचीनार्वाचीनयोः कतरस्य वैलक्षण्यमिति सयुक्तिकं प्रतिपाद्य 'साअर विइण्णजोव्वण हत्थालम्बं···'इत्यस्य 'उद्दित्तरकआभोआ···'इत्यपेक्षया वैशिष्ट्यं प्रतिपाद्यत।**

**उत्तरम्**—कविप्रौढोक्तिसिद्धार्थशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यध्वनियोगेन पुरातनार्थकस्यापि श्लोकस्यापूर्वार्थकत्वमुदाहरति 'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्। अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान् ॥' इत्येतत्समानार्थकस्य—'सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः। रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः ॥' इत्यस्य रागिजनोत्कण्ठानां प्रादुर्भावस्य सहकारकलिकाप्रादुर्भावजन्यत्वेऽपि समकालिकत्ववर्णनहेतुकातिशयोक्तिमूलकत्वात्सहोक्त्यलङ्कारालंकृतत्वेऽपि तदपेक्षया 'सज्जयति···' इत्यादिप्रतिपाद्यस्य प्राधान्येन व्यङ्ग्यपदवीमारूढ—कविप्रौढोक्तिसिद्ध—वसन्तधर्मिकमदनोद्दीपकत्वातिशयव्यञ्जकतया तादृशध्वनिसम्पर्केण नवीनत्वम्प्रतिभासते। तथा हि—अचेतनो वसन्तः शरनिर्माता, कामदेवो धन्वी, युवतिजनो लक्ष्यम्, सहकारमञ्जरी बाणाः, इत्यादि वस्तुरूपोऽर्थः कविप्रौढोक्तिमात्रसिद्धः प्रधानतया वसन्तस्य मन्मथोन्माददायकत्वं क्रमशो व्यनक्ति, इत्येतादृशध्वनियोगेनैव प्राक्तनस्याप्यर्थस्याभिनवत्वं सहृदयैरनुभूयमानं नापलपितुं पार्यते कथञ्चिदिति भावः।

अथ कविनिबद्धजनप्रौढोक्तिसिद्धसंलक्ष्यक्रमार्थशक्त्युद्भवध्वनिसम्पर्केण प्राक्तन-

स्याप्यार्थस्याभिनवत्वमुदाहरति—'सादरवितीर्णयौवनहस्तावलम्बं समुन्नमद्भ्याम् । अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥' इत्येतत्समानार्थकेन—'उदित्वर-कचाभोगा यथा यथा स्तनका वर्धन्ते बालानाम् । तथा तथा लब्धावास इव मन्मथो हृदयमाविवेश ॥' इत्यनेनापि यौवनारम्भे बालानां मदनातिशयो यद्यप्युत्प्रेक्षाभङ्ग्या परिष्कृतवाच्यद्वारा व्यज्यत एव, तथापि 'सादरवितीर्णयौवनहस्तावलम्बम्...' इत्यनेन यथा कविनिबद्धकामुकजनप्रौढोक्तिसिद्धार्थस्य व्यञ्जकतया विच्छित्तिविशेषो वितीर्यते न तथा प्राक्तनेनेति सहृदयहृदयवेद्यमेतत् । तथाहि—यौवनद्वारोन्नम्यमानाभ्यां तव स्तनाभ्यां कामः सत्कृतः । एतावता लोके यथा कश्चित् स्वयमुत्थातुमसमर्थोऽनुचरहस्तावलम्बेनोत्तिष्ठन् समागच्छतो गुरुजनस्याभ्युत्थानं करोति, तथैव स्वयमुत्थातुमसमर्थौ तव कुचौ यौवनरूपभृत्यकरावलम्बं विधाय समागतस्य कामस्याभ्युत्थानमिवाकुरुतामिति समासोक्त्युत्प्रेक्षासाङ्कर्येण कविकल्पितकामुकजनप्रौढोक्तिनिष्पन्नार्थस्य तादृशव्यङ्ग्यार्थसम्पर्केण नितरामभिनवत्वं भासते ।

**(१०१) प्रश्नः—महाभारते वीरादिरसस्य सहृदयैरास्वाद्यमानत्वेऽपि कथं शान्तरसस्यैव तत्र प्राधान्यमित्यत्र का वाचोयुक्तयः? इति सोपष्टम्भं विवेचयत ।**

**उत्तरम्**—अयमाशयः-महर्षिणा व्यासेन महाभारते सहृदयानामानन्दाय शान्तो रसः, मुमुक्षूणां सन्तोषणाय मोक्षरूपपरमपुरुषार्थश्च प्राधान्येन प्रकाशितः । अत एव तेन ( व्यासेन ) भारतान्ते यदुकुरुवंशनाशो वर्णितः । तेन च समेषामेव प्राणिनामेषैव गतिर्भवतीति आपातरमणीयेऽसारे संसारेऽलं प्रत्ययोत्पादनात् तृष्णाक्षयजन्यसुखविशेषात्मकशमस्थायिभावकः शान्तरसस्तत्तादात्म्याध्यासेन तु पार्यन्तिकस्थितिशालितया नश्वरत्वाभावेन च प्रधानतयाऽऽशंसाविषयोऽपवर्गात्मकः परमपुरुषार्थश्च सूचितः । तदुक्तं वृत्तौ-'महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः, शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः ।' इति जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुणा करुणावरुणालयेनातिविमलालोकदायिना मुनिना व्यासेन स्वयमेवोक्तम्—'यथा यथा विपर्यैति लोकतन्त्रमसारवत् । तथा तथा विरागोऽत्र जायते नात्र संशयः ॥' इति । तथा च शान्तो रसो वीरादिरसैः, मोक्षलक्षणः परमपुरुषार्थश्च धर्मार्थकामादिपुरुषार्थान्त-

रैस्तदुपकारकतयाऽनुगम्यमानोऽपि प्राधान्येनैव विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते। न चैवं भारते वीरादिरसानां धर्मादिपुरुषार्थानाञ्च प्राधान्येन सहृदयैरनुभूयमानं चमत्कारित्वं नापलपितुं पार्यते इति वाच्यम्? पारमार्थिकान्तस्तत्त्वानपेक्षयाऽङ्गभूतस्य शरीरस्येव तत्तद्रसस्य धर्मादिपुरुषार्थस्य च स्वप्राधान्येन चारुत्वस्याप्यविरुद्धत्वात्। एतावता यथाऽङ्गिनं सारभूतमात्मतत्वमविदुषां बालिशानामङ्गभूतस्य देहस्यैव प्राधान्यमात्मत्वञ्च प्रतीतं भवति, तथैव महाभारते प्रधानतया व्यङ्ग्यभूतं शान्तं रसं, मोक्षरूपं परमपुरुषार्थञ्चावधारयितुमसमर्थानां जनानां कृते आवान्तरिकस्य वीरादिरसस्य, धर्मादिपुरुषार्थस्य च प्राधान्यं प्रतीयते, तच्च प्राधान्यं नैव वास्तविकम्. परमार्थतः शान्तरसमोक्षयोः प्राधान्यस्यैव निर्धारितत्वादिति फलितम्। महाभारतानुक्रमण्यां शान्तरसस्यैवाङ्गित्वेन, मोक्षस्य च प्राधान्येन शब्दतः प्रतिपादनाभावेऽपि व्यञ्जनया प्रतिपादितत्वात्। तथा हि—'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः।' इत्येतस्मिन् वाक्ये ह्ययमर्थो व्यङ्ग्यत्वेन विवक्षितो—'यदत्र महाभारते पाण्डवादिचरितं यत् कीर्त्यते, तस्मात् तस्मिन्नेव परमेश्वरे भगवति भवतभावितचेतसो, माभूत विभूतिषु निस्सारासु रागिणो, गुणेषु वा नयविनयपराक्रमादिष्वमीषु केवलेषु केषुचित् सर्वात्मना प्रतिनिविष्टधियः, यथाचाग्रे पश्यत निस्सारतां संसारस्य' इत्यमुमेवार्थं द्योतयत् स्फुटमेवावभासते। व्यञ्जकशक्त्याऽनुगृहीतश्च शब्दः। एवंविधमेव चार्थं गर्भीकृतं सन्दर्शयन्तो नन्तरश्लोकाः प्रतीयन्ते—'स हि सत्यमृतं चैव पवित्रं पुण्यमेव च। शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्। यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः॥' इत्यादि। अयञ्च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता कविवेधसा कृष्णद्वैपायनेन सम्यक् स्फुटीकृतः। अनेन चार्थेन संसारातीते तत्त्वान्तरे भक्त्यातिशयं प्रवर्तयता सकल एव सांसारिको व्यवहारः प्रत्याख्येयतया प्रकाशते। अथ यदि महाभारतस्य परब्रह्मप्राप्तिलक्षणेऽपवर्गे एवान्ततस्तात्पर्यं तर्हि तत्र सामान्येन विशेषेण च देवतानां तीर्थानां तपसाञ्च माहात्म्यं पाण्डवादिचरित्रञ्च कथं प्रपञ्चितमिति चेन्मैवम्, देवतातीर्थतपःप्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन, तत्तद्विभूतित्वेनैव वा देवताविशेषाणामन्येषां, पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्यात्, वैराग्यस्य च मोक्षमूलत्वात्, मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीताऽदिषु प्रदर्शितत्वेन परब्रह्मप्राप्त्युपायत्वात्। तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्याऽनित्यतां प्रकाश-

यतो मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्य प्रधानतया विवक्षित इति सुप्रतिपादितम्।

(१०२) प्रश्नः—'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥'

**इत्यत्र किं प्रस्तुकाविच्छित्तिरिति विवक्षितार्थप्रदर्शनपूर्वकं सोपपत्तिकं समुपपादयत।**

**उत्तरम्**—'मुनिर्जयति योगीन्द्रः....'इत्यत्र मीनकच्छपदर्शनेन व्यज्यमानैकचुलकाधिकरणकजलधिसम्मानेन मुनेर्माहात्म्यव्यञ्जनाद् मुनिविषयकरतिभावस्यैव प्राधान्येनास्वाद्यतयाऽद्भुतरसस्य तदङ्गतयैव भानेन रसवदलङ्कारत्वमिति केचित्। वस्तुतस्तु एकस्मिन्नेव चुलके तादृशात्यन्तविलक्षणमत्स्यकच्छपयोर्दर्शनं विस्मयाधिक्योत्पादकतया विस्मयस्थायिभावकाद्भुतरसास्वादप्रयोजकमित्यद्भुतरसास्वादस्यैव लोकोत्तरचमत्कारशालितया काव्यस्य मुख्याङ्कप्रयोजकत्वमवसेयम्। तादृशानिर्वचनीयमत्स्यकच्छपरूपविभावादिसंसृष्टविस्मयोल्लासेनाद्भुतरसास्वादस्यापलपितुमपार्यत्वात्। न चात्रैकचुलके दिव्यमत्स्यकच्छपदर्शनरूपेण वाच्येन व्यज्यमानं चुलके जलधिसन्निधानमेवाद्भुतरसं पुष्णाति न तु तादृशदर्शनात्मकवाच्यमिति वाच्यम्? व्यज्यमानैकचुलकाधिकरणजलधिसम्मानापेक्षयाऽपि दिव्यमत्स्यकच्छपदर्शनस्यैवाक्षुण्णतयाऽद्भुतरसानुगुणतरत्वात्। एतावता यद्यप्येकचुलके जलधिसन्निधानरूपव्यङ्ग्यादपि अद्भुतरसः पोष्यत एव, तथाप्यदृष्टाश्रुतपूर्वतादृशमत्स्यकच्छपदर्शनं ततोऽप्यधिकाश्चर्यजनकमिति भावः। यतः क्षुण्णं हि वस्तु लोकप्रसिद्धयाऽद्भुतमपि नाश्चर्यजनकं भवतीति हृदयम्।

(१०३) प्रश्नः—**वाच्यवैचित्र्यस्य काव्याभिनवत्वप्रयोजकत्वे का वाचोयुक्तय इति सोपष्टम्भं विविच्य किमिदं वाच्यवैचित्र्यमिति सोपपत्तिकं निरूपयत।**

**उत्तरम्**—'अवस्थादेशकालादि-विशेषैरपि जायते। आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः॥' इति कारिकानुसारं शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्य स्वभावत आनन्त्यमेव जायते। स्वभावो ह्ययं चेतनाचेतनानां वाच्यानां यदवस्थाभेदात्, देशभेदात्, कालभेदात्, स्वालक्षण्यात्मकस्वरूपभेदाच्चानन्ता भवति। तैश्चावस्थादिभेदभिन्नतया व्यवस्थितैः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्याऽपि

तावदुपनिबध्यमानैर्निरवधिः काव्यार्थः सम्पद्यते । अर्थात् अवस्थादिभेदभिन्नैकविध-वस्तुस्वभाववर्णनेनापि काव्यार्थाभिनवत्वमिव प्रतिभातीति हृदयम् । तदुक्तं-'न च तेषां घटतेऽवधिर्न च ते दृश्यन्ते पुनरुक्ताः । ये विभ्रमाः प्रियाणामर्था वा सुक-विवाणीनाम् ॥' इति । एतावता 'उपदिशति कामिनीनां यौवनमद एव ललितानि' इत्यादिप्रसिद्धेर्यथा ललनानां यौवनारम्भे अशिक्षितस्यापि विलासविशेषस्या-विर्भावस्तथैव प्रतिभाप्रकर्षोद्भवे सुकविवाणीनामर्थनिकरा अपि 'क्षणे क्षणे यन्नवता-मुपैति तदेव रूपं रमणीयतायाः' इत्युक्तेर्नवनवा एव प्रतीयन्त इति भावः । तत्रा-वस्थाभेदान्नवत्वं यथा कुमारसंभवे–भगवती पार्वती 'सर्वोपमाद्रव्यसमुच्चयेन' इत्यादि-भिरुक्तिभिः प्रथममेव परिसमापितसौन्दर्यवर्णनापि, पुनर्भगवतः शम्भोर्लोचनगोचरतां प्राप्नुवती–'वसन्तपुष्पाभरणं वहन्ती' इत्यादि कामदेवोपकरणभूतेन भङ्ग्यन्तरेणोप-वर्णिता । सैव च पुनर्नवोद्वाहवेलायां प्रसाध्यमाना 'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' इत्याद्युक्तिभिर्नूतनेनैव प्रकारेण निरूपितसौन्दर्याऽपि कविकुलगुरुणैकत्रैव वर्णनविषयतया पुनरुक्तत्वेनानवनवार्थनिर्भरत्वेन वा सहृदयानां मनागपि वैरस्यं नादधाति । किञ्चाचेतनेष्वपि हिमवद्गिरिगङ्गाप्रभृतिषु चेतनस्वरूपारोपादपूर्वत्वं भवतीत्येवं रीत्याऽपि वाच्यस्यावस्थाभेदाद् भिन्नत्वं बोध्यम् । चेतनानामवस्था-भेदेऽप्यवान्तरावस्थाभेदादानन्त्यम् । यथा बालानां पञ्चबाणविद्धहृदयानामनु-द्भिन्नमदनविकाराणाञ्च, तत्रापि विनीतानामविनीतानाञ्च स्वरूपमुपनिबध्यमानमा-नन्त्यमेवोपयाति । एवमचेतनानां तावद् देशभेदादानन्त्यं यथा–पवनानां मलयहि-मवन्निर्झरनादि–नानादिग्देशचारितया शीतलमन्दसुगन्ध्यादिनानात्व-व्यवहारः प्रसिद्ध एव । चेतनानामपि मानुषपशुपक्षिप्रभृतीनां ग्रामारण्यसलिलादि-परिपोषितानां परस्परं महान् विशेषः समुपलक्ष्यत एव । स च यथायथमुपनिबध्य-मानस्तथैवानन्त्यमायाति । कालभेदाच्च वस्तूनां नानात्वं, यथा ऋतुभेदाद् दिग्व्योम-सलिलादीनामचेतनानामानन्त्यं भवति, तथाहि पूर्वादिदिशानां व्योम्नश्च शरदृतौ स्वच्छता, वर्षर्तौ मेघाच्छन्नत्वम्, शिशिरर्तौ च तुहिनावृतत्वं तथा सलिलसरणि-तरुगुल्मलताप्रभृतिष्वचेतनेषु कालभेदाद् भिन्नत्वमूह्यम् । चेतनानाञ्चौत्सुक्यादयः कालविशेषाश्रयिणः प्रसिद्धा एव यथा युवजनानां वसन्ते कामौत्सुक्यम्, ग्रीष्मे स्वान्तसन्तप्तत्वम्, शिशिरे जाड्यमित्यादि । स्वालक्षण्यरूपस्वरूपभेदाच्च सकल-जगद्वर्तिवस्तूनां यथावस्थौचित्येन निबन्धनन्तु काव्यार्थस्यानन्ततामेव प्रयोज-यति इत्यलम् ।

अथ यथा योगिनां योगजप्रत्यासत्त्या लौकिकप्रत्यक्षाविषयस्यापि परकीयचित्त-प्रभृतिवस्तुनोऽलौकिकप्रत्यक्षीकरणसामर्थ्यं, न तथा कवीनाम्, येन तेऽतीतवर्तमाना-गतवस्तुसार्थान् तत्तद्विशेषरूपेणाध्यक्षीकर्तुं शक्नुयुः, तस्मात् कवीनां सामान्यरूपे-णैव कथमपि त्रैकालिकपदार्थावगतिरिति पदार्थसामान्यस्य च मुष्टिमेयस्य वाल्मीकि-प्राक्तनकविभिरेव वर्णितत्वेन पिष्टपेषणतया नाक्षुण्णत्वमिति कथमर्वाचीनकविवर्णितं तत् काव्यार्थानन्त्याय कल्पेत ? कथङ्कारं वा नवनवीभावमासादयितुमर्हं स्यादिति चेदत्रोच्यते—यदि सामान्याश्रयेणैव कवीनां काव्येषु प्रवृत्तिस्तर्हि अवस्थादिविशेषात् प्रदर्शितप्रकारं काव्यवैचित्र्यं किं पुनरुक्तमेव, उताहो न, नोचेत्पुनरुक्तं तदा तद्धेतुकं प्राप्तं काव्यार्थानन्त्यं गीर्वाणगुरूणामप्यशक्यापह्नवमिति भावः। तदुक्तं—'यतो यदि सामा-न्यमात्रमाश्रित्य काव्यं प्रवर्तते, किं कृतस्तर्हि महाकविनिबध्यमानानां काव्यानामति-शयः ?' इति। न चेष्टापत्तिः कर्तुं शक्यते, वाल्मीकिव्यतिरिक्तस्यान्यस्य कविजनस्य कृते वैयर्थ्यापातापत्तेः। सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात्, सामा-न्यस्य चादिकविनैव प्रदर्शितत्वात्। न चोक्तिवैचित्र्यमात्रेणैव नूतनकविकृतेश्चमत्का-रिता स्यादिति वाच्यम् ! किमिदमुक्तिवैचित्र्यम् ? उक्तिर्हि काव्यविशेषप्रतिपादनव-चनम्, तद्वैचित्र्येण वाच्यवैचित्र्यस्यापि सिद्धेः, वाच्यवाचकयोरविनाभावेन प्रवृत्तेः सत्वात्। वाच्यानाञ्च काव्ये प्रतिभासमानानां यद्रूपं, तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते, तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमकामेनाप्यवश्यमभ्युपगन्तव्यम्। एतावता न ह्युक्तिवैचित्र्यमात्रेणार्वाचीनकविकाव्यानामपूर्वत्वं सम्भवति, वाच्यवाचकयोस्तादात्म्येन वाचकवैचित्र्यस्थले वाच्यवैचित्र्यस्याप्यवश्यम्भावेन प्रतिनियतवाच्यवैचित्र्यैव काव्या-पूर्वतानियामकत्वौचित्यात्, केवलवाचकवैचित्र्यस्याकिञ्चित्करत्वात्। तदुक्तम्—वाल्मी-किव्यतिरिक्तस्य, यद्येकस्यापि कस्यचित्। इष्यते प्रतिभाऽऽनन्त्यं तत्तदाऽऽनन्त्यमक्ष-तम् ॥' 'अवस्थादिविभिन्नानां वाच्यार्थानां निबन्धनम्। भूम्नैव दृश्यते लक्ष्ये न तच्छक्यमपोहितुम् ॥' इति। किन्तु तादृशवाच्यनिबन्धनमपि 'तत्तु भाति रसाश्र-यात्' इत्युक्ते रसव्यञ्जकतयैव छायातिशयमासादयतीति सारम्।

(१०४) प्रश्नः—**कीदृशश्च प्राचीनकविसंवादोऽर्वाचीनकविभिरुपादेयः कीदृशश्च नोपादेय इति सविशदं संवादभेदप्रदर्शनपुरस्सरं प्रतिपादयत।**

**उत्तरम्**—'संवादो ह्यन्यसादृश्यं तत् पुनः प्रतिबिम्बवत्। आलेख्याकारवत् तुल्य-देहिवच्च शरीरिणाम् ॥' इति कारिकानुसारं संवादो हि कवेः काव्यार्थस्य तद्-

न्येन काव्यवस्तुना सादृश्यमुच्यते। तत्पुनः प्राणिनां प्रतिबिम्बवत्, आलेख्याकारवत्, तुल्यदेहिवच्च त्रिधा व्यवस्थितम्, तत्र प्रथमं–किञ्चित् काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बकल्पम्, द्वितीयम्–आलेख्यप्रख्यम्, तृतीयं–तुल्येन शरीरिणा सदृशम्। तत्रापि–'तत्र पूर्वमनन्यात्म, तुच्छात्म, तदनन्तरम्। तृतीयं तु प्रसिद्धात्म, नान्यसाम्यं त्यजेत् कविः॥' इति रीत्याऽनन्यात्मरूपं प्रतिबिम्बस्थानापन्नं प्रथमं नोपादेयम्, तथैव द्वितीयमपि आलेख्यप्रख्यं तुच्छात्मकं नोपादेयमर्वाचीनकविभिः किन्तु तृतीयं तुल्यदेहिवत् प्रसिद्धात्मरूपमन्यसाम्यं कमनीयतया पुनरुपादेयमेवेति भावः। तदुक्तं वृत्तौ–'तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना, यतस्तदनन्यात्मतात्त्विकशरीरशून्यम्। यदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तुच्छात्मत्वेन त्यक्तव्यम्। तृतीयन्तु कमनीयं शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना। न हि शरीरी शरीरिणाऽन्येन सदृशोऽप्येक एवेति शक्यते वक्तुम्। इति। तथा च 'तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि। वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम्' इत्युक्तेश्चन्द्रसदृशस्यापि ललनालपनस्य लावण्यसौन्दर्यसद्भावेन यथा सुषमोपचय एव नापचयस्तथैव प्राचीनकविवर्णितार्थसंवादशालिनोऽपि अर्वाचीनकविकृतकाव्यार्थस्य रसादिव्यङ्ग्यसम्पर्केण शोभोत्कर्ष एव न तु पुनरुक्तत्वेन तदपकर्ष इति हृदयम्। तदुक्तम्–'अक्षरादिरचनेव योज्यते, यत्र वस्तुरचना पुरातनी। नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति॥ इति शम्।

इति अमदावादस्थकाशीविश्वनाथसंस्कृतमहाविद्यालयाध्यापक–न्याय–व्याकरणाद्यनेकशास्त्राचार्यलब्धस्वर्णपदकपण्डितश्रीशोभितमिश्रविरचितं ध्वन्यालोकरहस्यं समाप्तम्।



## नवीन शिक्षापद्धति के अनमोल रत्न—

**साहित्यदर्पण**—अतिमनोरम हिन्दी व्याख्या, शब्दानुवाद, पदकृत्य, भाष्य-वक्तव्य, आदि से सुसज्जित राष्ट्रभाषा का बेजोड़ संस्करण — प्रेसमें

**काव्यप्रकाश**—'शशिकला' हिन्दी व्याख्या, विमर्श-टिप्पणी, सुविस्तृत समालोचना आदि आधुनिक विविध विषयों से सुसज्जित । व्याख्याकार डा० सत्यव्रत सिंह एम० ए०, प्रो० लखनऊ विश्वविद्यालय — प्रेसमें

**दशरूपक**—'चन्द्रकला' हिन्दी व्याख्या, सुविस्तृत वक्तव्य, समालोचनादि सहित व्याख्याकार-डा० भोलाशंकर व्यास प्रो० हिन्दूविश्वविद्यालय, काशी — ५)

**कर्पूरमञ्जरी**—'मकरन्द' संस्कृत-हिन्दी व्याख्या, समालोचनादि सहित — २)

**अभिज्ञानशाकुन्तल**—प्रो० कान्तानाथ शास्त्री एम० ए० सम्पादित शाकुन्तल-समीक्षा, कविकी जीवनी, पात्रालोचन, कथासार, नोट्स आदि हिन्दी राष्ट्रभाषा से सुसज्जित 'किशोरकेलि' संस्कृतहिन्दी टीका विभूषित — ६)

**मृच्छकटिक**—'प्रकाश' संस्कृत-हिन्दी टीका प्रो० कान्तानाथ शास्त्री एम. ए. विरचित नवीन निर्धारित समालोचना, नोट्स आदि सहायक विषयों से सुसज्जित — सुलभ संस्करण ५) राज संस्करण ६)

**उत्तररामचरित**—प्रो. कान्तानाथ शास्त्री एम. ए संपादित नोट्स सहित 'चन्द्रकला' 'नियोतिनी' संस्कृत-हिन्दी टीका, विस्तृत प्रस्तावना विभूषित — ४॥)

**प्रतिमानाटक**—'प्रकाश' संस्कृत-हिन्दी टीका समालोचनादि सहित — २)

**मालविकाग्निमित्र**—'प्रकाश' संस्कृत-हिन्दी टीका, समालोचनादि सहित — ३)

**मालतीमाधव**—'चन्द्रकला' संस्कृत-हिन्दी टीका, समालोचनादि सहित — ५)

**रत्नावली**—'प्रकाश' संस्कृत-हिन्दी टीका, समालोचना, नोट्स सहित — ३)

**विक्रमोर्वशीय**—'प्रकाश' संस्कृत-हिन्दी टीका, समालोचना, नोट्स सहित — ३)

**वासवदत्ता**—'चपला' संस्कृत हिन्दी टीका प्रस्तावनादि सहित — ४)

**महावीरचरित**—'प्रकाश' संस्कृत-हिन्दी टीका, समालोचना, नोट्स सहित — ४)

**नागानन्दनाटक**—'भावार्थदीपिका' संस्कृत-हिन्दी टीका " " — ३)

**स्वप्नवासवदत्ता**—'प्रबोधिनी' 'प्रकाश' संस्कृत-हिन्दी टीका " " — २॥)

**कादम्बरी**—चन्द्रकला-वियोतिनी संस्कृत-हिन्दी टीका सहित पूर्वार्ध — १२॥)

**तर्कभाषा**-'तर्करहस्यदीपिका' हिन्दी व्याख्या समालोचनादि सहित — ४॥)

**वेदान्तसार**—भावबोधिनी संस्कृत-हिन्दी टीका समालोचनादि सहित — १॥)

**नैषधमहाकाव्य**—'जीवातु' 'मणिप्रभा' संस्कृत-हिन्दी टीका सहित संपूर्ण — १३)

---

## परीक्षा-प्रश्नोत्तरी-माला